Surprise!
For Rasna Kids!
Surprise!
For Rasna Mums!

Copyright © 1981 Marvel Comics Group.




TM

New
Rasna
Spider-man
pack!




Orange ☐ Pineapple ☐ Lime ☐ Shahi Gulab ☐ Kala Khatta ☐ Kool Khus ☐ Kesar Elachi ☐ Masala Soda (Jal Jeera) ☐ Tooti Frutti ☐ Mango Ripe ☐ Grape Glory

# Refreshing Rasna

**11 lovable flavours at a lovable price.**

Mudra:A:EAMR:4570

*Pick a PINKY...*

*and let your writing sparkle...*

LION

# PINKY

*the Prettiest Pencil in town.*

Now from Lion Pencils, here's another Novelty...
the Pearl finished **LION PINKY** pencil, a pretty pencil to behold.
Superb in looks, super smooth in writing with its HB Lead
strongly bonded to give you unbreakable points.

***Also available with rubber tip and hexagonal***

***Other popular brands of Lion Pencils are:***
Lion **MOTO,** Lion **TURBO,** Lion **SWEETY,** Lion **CONCORD,**
Lion Hi-Tech **METALLIC,** Lion **MASH-HOOR,** Lion **EXECUTIVE,**
Lion **NOVELTY,** Lion **GEEMATIC** Drawing Pencils
and **RATTAN** Colour Pencils & Wax Crayons.



**LION PENCILS PVT. LTD.** 95 Parijat. Marine Drive, Bombay 400 002.

National-407

जिज्ञासा –

# 'शक्यते' इत्यत्र....

शिष्यः-श्रीमन्! 'शक्लृ' धातुः (शक्नोति-इति वर्तमानकाले प्रथमैकवचने) सकर्मकः, उत अकर्मकः?

आचार्यः- मां किमर्थं पृच्छति एतद्विषये? सकर्मकाकर्मकत्वनिर्णये समर्थः खलु भवान्? अतः भवान् एव विचिन्त्य वदतु तावत्।

शि - कं/कां/किं शक्नोति? इति प्रश्नस्य उत्तरं नास्ति। अतः शक्लृधातुः अकर्मकः। सत्यं खलु?

आ - आम्। शक्लृधातुः अकर्मकः एव।

शि - प्रयोगभेदात् सकर्मकाकर्मकत्वव्यवस्थायां व्यत्यासः भवति वा? तन्नाम कर्तरिप्रयोगे कश्चन धातुः अकर्मकः सन् कर्मणिप्रयोगे सकर्मकः भवितुम् अर्हति वा?

आ - सकर्मकाकर्मकत्वव्यवस्थायाः प्रयोगस्य च कोऽपि सम्बन्धः नास्ति। कश्चित् धातुः सकर्मकः चेत् सः प्रयोगद्वये (कर्तरि कर्मणि च) अपि सकर्मकः एव। अकर्मकः चेत् अपि कर्तरि भावे चापि अकर्मकः एव। तदस्तु तावत्, एवं बहुधा प्रश्नं किमर्थं पृच्छन् अस्ति? कुत्र भवतः सन्देहः?

शि - 'प्रयत्नः कर्तुं शक्यते' इति कुत्रचित् प्रयोगः दृष्टः। प्रयत्नशब्दः द्वितीयान्तः यदि प्रयुक्तः स्यात् ('प्रयत्नम्' इति) तर्हि तस्य अन्वयः 'कर्तुम्' इत्यनेन इति वक्तुं शक्यम् अभविष्यत्। किन्तु 'प्रयत्नः' इति प्रयोगः कृतः। अतः तस्य अन्वयः शक्यते इत्यनेन एव। तथा चेत् शक्यते इत्यस्य सकर्मकत्वम् अङ्गीकरणीयं भवति।

आ - सुसूक्ष्मं चिन्तितं भवता। शक्लृधातुः एकः एव मया अपि दृष्टः, यश्च

प्रयोगभेदात् सकर्मकत्वं प्राप्नोति इति। किमर्थम् एवं भवति इत्यस्य उत्तरम्· अहम् अपि न जानामि। अभिज्ञाः शास्त्रतत्त्वज्ञाः प्रष्टव्याः।

शि - श्रीमन्! 'प्रयत्नः कर्तुं शक्यते' इत्यादयः प्रयोगाः प्रामादिकाः कुतो वा न स्युः? शक्लृधातोः कर्तरि अकर्मकत्वात् तस्य कर्मणि सकर्मकत्वस्य अङ्गीकारापेक्षया, तादृशस्य प्रयोगस्य प्रामादिकत्वाङ्गीकारः एव उचितः भवेत् खलु?

आ - यदि अस्मदादीनां प्रयोगः स्यात् तर्हि स च प्रयोगः प्रामादिकः इति वक्तुं शक्येत। किन्तु अप्पय्यदीक्षिताः लिखन्ति* – पूजयितुं शक्यते हरिः हरिं वा इति उभयं साधु इति।
कैयटः लिखति** – 'क्षुत् प्रतिहन्तुं शक्या/शक्यम् इति, क्षुदं प्रतिहन्तुं· शक्यम् इति वा' इति।

अतः एतादृशाः प्रयोगाः प्रामादिकाः तु न।

शि - श्रीमन्! एवं तर्हि–

प्रयत्नः कर्तुं शक्यते, प्रयत्नं कर्तुं शक्यते
हरिः पूजयितुं शक्यते, हरिं पूजयितुं शक्यते।

इत्यादिरूपेण उभयथा अपि वक्तुं शक्नुमः?

आ - निश्चयेन।

शि - तदा कथम् अन्वयः?

आ - 'प्रयत्नः कर्तुं शक्यते' इत्यत्र प्रयत्नशब्दस्य शक्यते इत्यनेन (शाब्दः) अन्वयः। 'प्रयत्नं कर्तुं शक्यते' इत्यत्र तु प्रयत्नशब्दस्य तुमुन्नन्तेन अन्वयः, तुमुन्नन्तस्य कर्मत्वेन शक्यते इत्यत्र अन्वयः। एवं च न कोऽपि क्लेशः।

---

* प्रौढमनोरमायां द्वितीयाविभक्तिविचारसन्दर्भे।

** महाभाष्ये पस्पशाह्निके धर्मनियमाधिकरणे।

कविहृदयम्–

# ज्ञानपरिशोधनम्

न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु॥

नैष्कर्म्यसिद्धिनामके ग्रन्थे सुरेश्वराचार्याः वदन्ति– 'कीर्तिः, धनं, सम्माननम् इत्यादीनां प्रतिफलानां निमित्तम् अहम् एतं ग्रन्थं न लिखन् अस्मि। एतस्मिन् ग्रन्थे यः विषयः प्रतिपादयिष्यते तद्विषये आत्मनः ज्ञानं युक्तम् उत न इति परीक्षितुम् इच्छन् एतं ग्रन्थं लिखन् अस्मि। ब्रह्मविदः अत्र निकषाः' इति।

यदा लेखनार्थम् उद्युक्ताः भवामः, यदा बोधनार्थं प्रवर्तामहे, यदा वा भाषणार्थं सन्नाहं कुर्मः तदा सर्वदा अपि निरूपणीयस्य विषये स्वस्य ज्ञानं परिष्कृतं भवति। प्रायः सर्वेषाम् अनुभवः एषः एव। यतः लेखने, बोधने, भाषणे वा यदा प्रवृत्तिः भवति तदा सुविचिन्त्य खलु प्रवर्तनीयम्? अज्ञातम् अस्पष्टं वा ज्ञातं विषयं वयं कदापि परिणामकारितया निरूपयितुं न शक्नुमः। अतः निरूपणोद्योगतः पूर्वं विषयः सम्यक् परिशीलनीयः, मनसि दृढम् आकलनीयः च। तदा सहजतया नूतनानाम् अंशानां स्फुरणं, सन्देहानां निवृत्त्यर्थं परिशीलनं च भवति। अतः अध्ययनेन यावत् ज्ञानं वर्धते, ततोऽपि पञ्चगुणितं वर्धते निरूपणोद्योगेन।

निरूपणेन विषयस्य परिशोधनं भवति चेत् सम्भाषणेन भाषायाः परिशोधनं भवति। पदवीप्राप्त्यादिसन्दर्भे प्राप्तं ज्ञानं तु बुद्ध्युपारूढम्। तत् यदा प्रयुज्यमानं भवति तदा एव तस्य परिशोधनं वर्धनं च। लेखनेन अपि भाषापरिशोधनं भवति एव, किन्तु लेखनस्य सीमितताः बहवः। सम्भाषणस्य तु अनन्तः अवकाशः।

अतः भोः संस्कृतबान्धवाः! सम्भाषणे प्रवृत्ताः भवन्तु। भाषाविषये यत् ज्ञातम् इति भवन्तः मन्यन्ते तस्य परिशोधनं कुर्वन्तु। सम्भाषणे नैरन्तर्यम् अस्ति चेत् भाषापरिशोधने अपि नैरन्तर्यं भवति एव।




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'    सञ्चालकः– 'नागिरेड्डी'

कश्चित् अस्वस्थः चेत् तं ये ये पश्यन्ति ते सर्वे कमपि औषधोपचारं सूचयन्ति। ते तद्विषये परिणताः इति न। 'केनापि एतत् औषधं सेवितं, सः स्वस्थः जातः' इति एतावत् एव जानन्ति ते। पूर्वं दृष्टः रोगी वैद्यस्य सूचनानुसारम् औषधं सेवितवान् आसीत् इति, इदानीं दृश्यमानः रोगी वैद्येन सूचितम् औषधं सेवमानः अस्ति इति च सर्वथा विस्मरन्ति ते।

संस्कृतप्रचारविषये अपि बहूनां प्रतिक्रिया एतादृशी एव भवति। 'एवं करणीयम्, तथा करणीयम्, एवं कृतं चेदेव प्रगतिः, एषः अनुचितः मार्गः' इत्यादिरूपेण जनाः स्वाभिप्रायं स्वेच्छया प्रकटयन्ति। तादृशाः कृतश्रमाः, प्राप्तानुभवाः, परिणताः वा न भवन्ति प्रायः। तत्क्षणे यत् स्फुरितं तत् उच्यते तैः।

केनचित् अनुभविना उक्तम्– "रूप्यकद्वयस्य मदजनकं वस्तु सेवितं चेत् यथेष्टं स्वप्नाः द्रष्टुं शक्यन्ते। अतः स्वप्नदर्शने न कोऽपि क्लेशः। किन्तु स्वप्नस्य साकारतां सम्पादयितुं समग्रं जीवनम् एव समर्पणीयं भवति" इति।

संस्कृतस्य वास्तविकं प्रचारं प्रसारं च इच्छन्तः वयं केवलस्वप्नद्रष्टारः न भवेम। स्वप्नस्य साकारतार्थं प्रयतमानेषु अन्यतमाः स्याम।

सम्पुटः–६    मे–१९८९    सञ्चिका–२

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००



रसप्रश्नाः–

# विभीषणशरणागतिः

('सीता रामाय अर्पणीया' इति रावणं बहुधा बोधितवान् विभीषणः। अन्ते रावणेन तिरस्कृतः सः रावणपक्षं परित्यज्य रामं शरणं गतवान्। रामः पूर्वापरम् आलोच्य सहकारिभिः समालोच्य विभीषणाय शरणं दत्तवान्। वाल्मीकिरामायणस्य एतं कथाभागम् आधारीकृत्य सज्जीकृताः केचन प्रश्नाः अधः सन्ति। उत्तररूपेण त्रयः विकल्पाः सूचिताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. श्रीरामं शरणं गन्तुम् इच्छन् विभीषणः कथम् आगतवान्?
   (अ) एकाकी आगतवान्।
   (आ) द्वाभ्यां राक्षसभटाभ्यां सह आगतवान्।
   (इ) चतुर्भिः सचिवैः सह आगतवान्।

II. आकाशमार्गेण आगच्छन्तं विभीषणं सर्वप्रथमं कः दृष्टवान्?
   (अ) सुग्रीवः। (आ) हनूमान्। (इ) अङ्गदः। (ई) जाम्बवान्।

III. विभीषणस्य आगमनं श्रुत्वा रामः कपिप्रमुखाणाम् अभिप्रायं पृष्टवान्। अभिप्रायम् अभिप्रायवक्त्रा सह योजयन्तु।

| | |
|---|---|
| (अ) उपायेन परीक्षणीयः सः। | (अ) सुग्रीवः। |
| (आ) गूढचरद्वारा परोक्षपरीक्षा करणीया। | (आ) जाम्बवान्। |
| (इ) अदेशकाले आगते न विश्वसनीयम्। | (इ) मैन्द्रः। |
| (ई) प्रत्यक्षतः प्रश्नेन तस्य स्वभावः ज्ञातव्यः। | (ई) अङ्गदः। |
| (उ) शरणायोग्यः सः दण्डनीयः। | (उ) हनूमान्। |
| (ऊ) तस्य स्वीकारः एव उचितः। | (ऊ)शरभः। |

IV. विभीषणाय अभयदानस्य अनन्तरं रामः किं कृतवान्?
   (अ) विभीषणं विश्रान्त्यर्थं वसतिमण्डपं प्रति प्रेषितवान्।
   (आ) विभीषणं सेनापतिस्थाने नियोजितवान्।
   (इ) राक्षसराजस्थाने विभीषणस्य अभिषेकं कारितवान्।

उत्तराणि–

I–इ. II–अ. III–अ-ई, आ-ऊ, इ-आ, ई-इ, उ-अ, ऊ-उ.
IV–इ
















# MAGGI क्लब

## 1989 की मौज-बहार! नए-नए उपहार!

## मैगी के सभी चाहने वालों के लिए मैगी क्लब के नए उपहार!

### ये उपहार मुफ़्त पाओ!

बस यह मैगी चिन्ह पाँच खाली पैकेटों से काट कर हमें भेज दो।
और बदले में लो अपनी पसंद का कोई भी उपहार।
ये मज़ेदार उपहार तुम्हें 6 से 8 सप्ताह के अंदर मिल जाएंगे।

**याद रखो:**

अगर तुम मैगी क्लब के सदस्य हो तो अपनी पसंद के उपहार के नाम के साथ-साथ अपना नाम, पता और सदस्यता नं॰ हमें हर बार भेजो।

अगर तुम मैगी क्लब के सदस्य नहीं हो तो अपनी पसंद के उपहार के नाम के साथ-साथ अपना नाम और पता ज़रूर लिखो।




हमारा पता है: मैगी क्लब, पी.ओ. बॉक्स नं०: 5788, नई दिल्ली-110 055

HTA 6320 HIN

# पारितोषिकदानम्

पूर्वं कश्चन भूस्वामी आसीत्। दानशूरः इति तस्य प्रतिद्धिः आसीत्। केनचित् लघुः उपकारः कृतः चेत् अपि तस्मै किमपि पारितोषिकं ददाति सः। एवं न कृतं चेत् तस्य तृप्तिः एव न भवति।

एकदा सः कोषे विंशतिं रूप्यकाणि स्थापितानि इति विस्मृत्य धनसहितं युतकं क्षालनाय रजकाय दत्तवान्। अनन्तरदिने रजकः– "श्रीमन्! ह्यः भवान् कोषस्थं धनं विस्मृतवान् आसीत् इति भाति" इति वदन् विंशतिं रूप्यकाणि प्रत्यर्पितवान्।

"भवादृशः प्रामाणिकः दुर्लभः एव। अतः एतानि दश रूप्यकाणि पारितोषिकरूपेण स्वीकरोतु" इतिः उक्त्वा दश रूप्यकाणि रजकाय दत्तवान् भूस्वामी।

पुनः अपि कदाचित् विस्मरणवशात् दशरूप्यकसहितं युतकं क्षालनार्थं रजकाय दत्तवान् भूस्वामी।

अनन्तरदिने रजकः आगत्य– "श्रीमन्! भवतः युतकस्य कोषे एतत् धनम् आसीत्, स्वीकरोतु" इति उक्त्वा पञ्च रूप्यकाणि दत्तवान्।

भूस्वामी किञ्चित् स्मृत्वा पृष्टवान्– "कोषे प्रायः दश रूप्यकाणि आसन् खलु?" इति।

तदा रजकः उक्तवान्– "आम्। दश रूप्यकाणि एव आसन्। ततः अर्धं मह्यं पारितोषिकरूपेण ददाति इति विचिन्त्य पञ्च रूप्यकाणि मत्समीपे स्थापयित्वा अवशिष्टं भवते दत्तवान्" इति।

अल्पस्य अपि निमित्तं पात्रापात्रताम् अपरिशील्य पारितोषिकं दत्तं चेत् कः परिणामः इति ज्ञातवान् भूस्वामी। तद्दिनतः तादृशम् अभ्यासं परित्यक्तवान् सः।





# वधूचयनम्

कस्मिंश्चित् ग्रामे पूर्वं करुणा नाम बालिका आसीत्। अन्वर्थं तस्याः नाम। तस्याः हृदयं करुणामयम्। यदा सा अष्टवर्षीया आसीत् तदा एव गाम्भीर्यं प्राप्तवती। तस्याः समवयस्काः क्रीडा-विनोदादिषु यथा आसक्ताः भवन्ति तथा एषा न भवति स्म।

करुणा यदा एकवर्षीया आसीत् तदा एव तदीया माता दिवङ्गता आसीत्। तदा पिता अन्यां परिणीतवान्। सा विमाता करुणां कदापि प्रीत्या न दृष्टवती। करुणा यदा बुभुक्षया रोदिति तदा उपेक्षया एव किञ्चित् अन्नं ददाति। एतावता मातृकर्तव्यं पालितं भवति इति तस्याः भावना आसीत्। किन्तु प्रतिवेशिनः बहवः म्लानवदनां करुणां दृष्ट्वा करुणया स्वगृहम् आहूय प्रीत्या खादनार्थं किमपि यच्छन्ति। एवं करुणा प्रतिवेशिनां प्रीत्या एव प्रवृद्धा।

कदाचित् विमातुः जानक्याः मातृगृहे कस्यापि विवाहः निश्चितः। विवाहनिमित्तं गन्तुम् उद्युक्ता जानकी करुणाम् एकाकिनीं गृहे परित्यज्य पुत्रेण पत्या च सह मातृगृहं गतवती।

अन्धकारप्रसारानन्तरं करुणा पाकं कृत्वा भोजनं कृतवती। तावता महती वृष्टिः आरब्धा। वातायनद्वारा बहिः पश्यन्त्या तया दृष्टं यत् कश्चित् गृहस्य पुरतः शयितः अस्ति इति। वृष्टिस्थगनस्य सूचना तु न दृश्यते। प्रतिवेशिनी विलासिनी करुणां स्वगृहे शयनार्थं सूचितवती आसीत्।

करुणा गृहस्य द्वाराणि सम्यक् पिधाय विलासिन्याः गृहं गन्तुम् उद्युक्ता। तावता गृहस्य पुरतः भित्तिपार्श्वे सुप्तं कञ्चित् सा स्पष्टं दृष्टवती।

समीपं गत्वा तं पृष्टवती सा - "कः भवान्?" इति।

तेन किमपि उत्तरं न दत्तम्। एषा अवनम्य तं स्पृष्टवती। तस्य शरीरं ज्वरेण तप्तम् आसीत्। "हन्त! महान् ज्वरः खलु दृश्यते!" इति उद्गारं प्रकटयन्ती सा तम् उत्थापयन्ती पुनः पृष्टवती – "श्रीमन्! श्रीमन्! कः भवान्?" इति।

सः 'हाँ, हूँ' इति ध्वनिं प्रकटयन् महता कष्टेन नेत्रे उन्मीलितवान्।

"उत्तिष्ठतु श्रीमन्! अहं हस्तसाहाय्यं ददामि। अन्तः आगच्छतु" इति उक्तवती करुणा।

अनन्तरं सा तं हस्तसाहाय्येन अन्तः नीत्वा मञ्चस्य उपरि शायितवती। शुष्कवस्त्रेण तस्य शिरः मार्जितवती च।

"श्रीमन्! भवतः समीपे अन्यत् वस्त्रम् अस्ति वा? कृपया मन्दम् उत्तिष्ठतु। अन्यत् वस्त्रं धरतु। अन्यत् नास्ति चेत् अहं ददामि" इति उक्तवती करुणा।

'अन्यत् वस्त्रम् अस्ति' इति हस्तसङ्केतेन सूचितवान् सः। करुणा तस्य स्यूततः शुष्कं वस्त्रं निष्कास्य तस्मै दत्तवती। सः तत् धृतवान्।

"इतः परं नेत्रे निमील्य किञ्चित् शयनं करोतु। समीपे एव वैद्यः अस्ति। तं दृष्ट्वा औषधम् आनेष्यामि" इति उक्त्वा गोण्या शरीरम् आच्छाद्य गृहात् निर्गतवती करुणा।

दशनिमेषाणाम् अनन्तरं प्रत्यागत्य – "श्रीमन्! ज्वरनिमित्तम् आनीतम् एतत्



औषधं स्वीकरोतु। प्रतिवेशिन्याः विलासिन्याः गृहतः उष्णं क्षीरम् अपि आनीतवती अस्मि। औषधसेवनं कृत्वा उष्णं क्षीरं पिबतु। प्रातःकालाभ्यन्तरे ज्वरात् मुक्तिः भवेत्" इति उक्तवती सा।

सः मन्दम् उत्थाय औषधं पीत्वा क्षीरम् अपि पीतवान्। आहारसेवनेन सः सम्भाषणार्थं शक्तिं प्राप्तवान्।

"भवत्याः नाम किम्? गृहे एकाकिनी वा भवती?" इति पृष्टवान् सः।

करुणा स्वस्य गृहसदस्यानां च परिचयं सङ्क्षेपेण निवेदितवती।

अनन्तरं तौ निद्रां कृतवन्तौ। प्रातः यावत् करुणा उत्थितवती तावता सः आगन्तुकः पुरुषः गन्तुम् उद्युक्तः आसीत्। सः स्वस्थः इव लक्ष्यते स्म।

सः करुणां दृष्ट्वा – "ह्यः अहं मद्विषये किमपि न उक्तवान्। मम सम्भाषणार्थं शक्तिः अपर्याप्ता इति भावयित्वा भवती अपि न पृष्टवती। इदानीं सर्वं वदामि। शृणोतु– मम नाम गुरुनाथः इति। नगरे त्रिचतुर्विधं वाणिज्यम् अस्ति मम। अस्वस्थं स्नेहितं द्रष्टुं प्रस्थितः अहम् एव मार्गे अस्वस्थः जातः। ह्यः औषधं यत् दत्तं ततोऽपि श्रेष्ठम् आसीत् भवत्याः उपचारः। भवत्याः उपकारं कदापि न विस्मरामि। यथाशक्ति प्रत्युपकारम् अपि कर्तुम् इच्छामि। काऽपि आवश्यकता यदि भवेत् तर्हि मां गुरुनाथं स्मरतु। एतत् स्वीकरोतु – मम परिचयपत्रम्" इति उक्त्वा





मन्दं क्रन्दन्तं गृहस्य पुरतः पतितं कञ्चित् अपरिचितं दृष्टवती। कुतूहलेन सा अग्रे गतवती। अपरिचितः अशीतिवर्षीयः वृद्धः आसीत् सः।

करुणामयी करुणा एतत् दृष्ट्वा तूष्णीं स्थातुं न शक्तवती। "हा तात! घोरे आतपे वृद्धः कृशकायः भवान् एकाकी किमर्थं प्रस्थितवान्? अन्तः आगच्छतु तावत्" इति वदन्ती हस्तसाहाय्येन तम् अन्तः नीतवती।

तं मञ्चे शाययित्वा आर्द्रेण वस्त्रेण तदीयं मुखं मार्जयित्वा पानार्थं तक्रं दत्तवती। तावता वृद्धः किञ्चित् उत्साहं प्राप्य– "वत्से! चिरकालं जीवतु" इति वदन् उत्थातुम् उद्युक्तः।

स्वसङ्केतसहितं कागदं तस्यै दत्तवान्।

गुरुनाथस्य निर्गमनानन्तरं क्रमशः दश वर्षाणि अतीतानि। करुणा इदानीं प्राप्तवयस्का अष्टादशवर्षीया तरुणी। एतेषु दशसु वर्षेषु बह्व्यः घटनाः प्रवृत्ताः। केनचित् व्याधिना करुणायाः विमाता जानकी दिवङ्गता आसीत्। तस्याः पुत्रः अपि अकालमरणं प्राप्तवान्। पितामहस्य स्वार्जिता भूमिः अपि प्राप्ता आसीत् करुणया। सा एव इदानीं गृहस्य स्मामिनी।

कदाचित् ग्रीष्मकाले मध्याह्नसमये करुणा गृहे उपविष्टवती आसीत्। तस्याः पिता कार्यनिमित्तं बहिः गतः आसीत्। करुणा भोजनं समाप्य यदा बहिः आगता तदा वेदनया

करुणा तस्य उत्थानं निवारयन्ती उक्तवती – "अस्मिन् घोरे आतपे कुत्र गमनम्? किञ्चित् शयनं करोतु" इति।

तदा सः वृद्धः भीतिं प्रकटयन् – "मम आगमनकारणं न जानाति भवती" इति वदन् स्वस्यूते स्थितं धनस्यूतं प्रदर्शयन् पुनः उक्तवान् – "मम पुत्रः गुरुनाथः नगरे महत् वाणिज्यं करोति। एतद्ग्रामीणैः कैश्चित् वणिजैः तस्मै धनं दातव्यम् अस्ति। तत् सङ्गृह्य आगच्छतु इति सः मां प्रेषितवान्। अहं गृहं न प्राप्नोमि चेदपि सः चिन्तां न कुर्यात्, किन्तु अद्य एतत् धनं न प्राप्तं चेत् सः मां प्राणरहितं कुर्यात्" इति उक्तवान्।

एतत् श्रुत्वा करुणा दशवर्षेभ्यः पूर्वं प्रवृत्तां

घटनां स्मृतवती। झटिति अन्तः गत्वा गुरुनाथेन दत्तं सङ्केतपत्रं बहिः आनीय वृद्धाय प्रदर्शयन्ती पृष्टवती– "एषः एव वा भवतः पुत्रः गुरुनाथः?" इति।

"आं वत्से! एषः एव मम पुत्रः। एतं सङ्केतं भवती कथं प्राप्तवती?" इति पृष्टवान् वृद्धः।

करुणा दशवर्षेभ्यः पूर्वं प्रवृत्तां घटनां विस्तरेण निरूपितवती।

"अस्तु तावत्, अहं गच्छामि" इति वदन् वृद्धः पुनः उत्थितवान्।

करुणां तं निवारयन्ती– "तात! भवतः वचनैः एव ज्ञायते यत् भवदीयः पुत्रः भवन्तं प्रीत्या न पालयति इति। तथापि तस्य समीपे एव स्थातव्यम् इति आग्रहः किमर्थं भवतः?" इति पृष्टवती।

"मम तादृशः आग्रहः कोऽपि नास्ति। पुत्रः एव यं प्रीत्या न पश्यति तादृशस्य पोषणभारं को वा निर्वहेत्? पुत्रं विना मम न अन्या गतिः" इति खेदेन उक्तवान् वृद्धः।

"तर्हि इदानीं मम वचनं शृणोतु। अद्य अत्रैव भोजनं कृत्वा विश्रान्तिसुखम् अनुभवतु। श्वः अहं भवता सह आगत्य भवतः पुत्रं बोधयिष्यामि– वृद्धः पिता न क्लेशनीयः, प्रीत्या द्रष्टव्यः सः इति। सः यदि मम वचनं न अङ्गीकुर्यात् तर्हि भवान् मम गृहे एव निवसतु। मां च पौत्रीं भावयतु" इति।



"आवयोः जन्मान्तरीयः सम्बन्धः इति भाति। भवती यथा वदति तथैव भवतु" इति उक्तवान् वृद्धः।

सायङ्काले करुणायाः पिता रामस्वामी गृहं प्रत्यागतवान्। करुणा प्रवृत्तं समग्रं पितरं निवेदितवती। रामस्वामी अपि करुणायाः विचारम् अङ्गीकृत्य तं वृद्धम् अपि तथैव उक्तवान्।

अनन्तरदिने ते त्रयः अपि वृद्धस्य गृहं गतवन्तः। तत्र गुरुनाथं दृष्ट्वा हासं प्रकटयन् वृद्धः करुणायाः हस्तं प्रीत्या गृहीत्वा– "मम पौत्राय योग्या वधूः आनीता भोः। पश्यतु गुरुनाथ!" इति उक्तवान्।

गुरुनाथः मन्दहासं प्रकटयन्– "मां

स्मरति वा भवती?" इति पृष्टवान्।

करुणा तस्य अभिज्ञानं प्राप्य हसन्ती शिरः चालितवती। तावता पञ्चविंशतिवर्षीयः कश्चन सुन्दरः तरुणः तत्र आगतवान्। गुरुनाथः करुणां रामस्वामिनं च उक्तवान्– "एषः मम पुत्रः श्रीकान्तः" इति।

श्रीकान्तः ततः निर्गतवान्। तदा गुरुनाथः करुणां रामस्वामिनं दृष्ट्वा– "भवतोः आश्चर्यं स्यात् खलु – किम् एतत् सर्वम् इति। वस्तुस्थितिः एवम्– लक्षशः रूप्यकाणां स्वामी मम पिता एतत् सर्वं कृतवान्। श्रीकान्तः मम अद्वितीयः पुत्रः। मम पत्नी केभ्यश्चित् वर्षेभ्यः पूर्वम् एव दिवङ्गता। सा स्वभावेन सरला। तत्सदृशी एव स्नुषा आनेतव्या इति मम अपेक्षा। दशवर्षेभ्यः पूर्वम् एषा करुणा दृष्टा मया। एतस्याः सारल्येन करुणाशीलतया च अहम् आकृष्टः। एतां स्नुषात्वेन आनेतुम् इष्टवान् अहम्। एतस्याः स्वभावं प्रत्यक्षं ज्ञातुम् इच्छन् मम पिता एवं नाटकम् अभिनीतवान्" इति उक्त्वा रामस्वामिनं पुनः उक्तवान्– "मम पुत्रः श्रीकान्तः दृष्टः खलु? भवतः पुत्री मम गृहस्य स्नुषात्वं यदि अङ्गीकुर्यात् तर्हि अस्माकं सन्तोषः भवेत्" इति।

"यथा भवन्तः इच्छन्ति तथा" इति उक्तवान् रामस्वामी।

"तथा न। करुणा मनःपूर्वकम् अङ्गीकरोति चेत् एव विवाहः प्रचलिष्यति। वत्से! करुणे! श्रीकान्ताय तु भवती अरोचत। इदानीं भवत्या निस्सङ्कोचं स्वाभिप्रायः वक्तव्यः" इति उक्तवान् गुरुनाथः।

करुणा मन्दहासपूर्वकं लज्जया शिरः अवनमय्य स्थितवती। तदा गुरुनाथस्य पिता करुणायाः हस्तं स्वहस्तेन गृह्णन् उक्तवान्– "भोः, गुरुनाथ! विवाहविषये कन्या इतोऽपि अधिकं किं कथयेत्? सर्वथा अनुभवहीनः भवान्" इति।

अनन्तरम् अल्पे एव काले शुभे मुहूर्ते करुणा-श्रीकान्तयोः विवाहः सवैभवं सम्पन्नः।





# विषमयं मिष्टकम्

अमरापुरस्य त्रयः भटाः कदाचित् राज्यसीमायां रक्षणकार्ये निरताः आसन्। तदा तैः उपायेन अश्वपुरस्य गूढचरः विनयनामकः गृहीतः। ते तं बद्ध्वा राजसमीपं नेतुम् उद्युक्ताः जाताः।

अरण्यमार्गेण गच्छन्तः ते विनयसमीपे किम् अस्ति इति शोधनीयम् इति आलोचितवन्तः। अतः तं वृक्षे बद्ध्वा तस्य वेषभूषादिकं शोधितवन्तः। तदा तैः तस्य वस्त्रेषु स्थितः लघुस्यूतः लब्धः। लघुस्यूते कागदबन्धः आसीत्। तस्य अन्तः तैः मिष्टकानि प्राप्तानि। घृतेन निर्मितानि तानि सुगन्धं प्रसारयन्ति स्म। अतः तेषां मुखे लाला उत्पन्ना।

तानि मिष्टकानि त्रिधा विभज्य खादितुम् उद्युक्ताः ते। तावता तेषु अन्यतमः उक्तवान्– "त्वरा मास्तु। मिष्टकानि विषमिश्रितानि भवितुम् अर्हन्ति। परीक्षाम् अकृत्वा तानि न खादनीयानि" इति।

मिष्टकानि खादनीयानि उत न इति ते सन्देहं प्राप्तवन्तः। तदा वृक्षे बद्धः विनयः तान् उक्तवान्– "सन्देहनिवारणार्थं मह्यम् एकं मिष्टकं प्रथमं यच्छन्तु" इति।

एकः भटः विनयस्य मुखे एकं मिष्टकं स्थापितवान्। जलम् अपि पायितवान्।

दश निमेषाः अतीताः चेदपि विनये कोऽपि विकारः न दृष्टः। अतः सन्देहं परित्यज्य भटाः सन्तोषेण मिष्टकानि खादितवन्तः।

एतदनन्तरं ते विनयेन सह अग्रे प्रस्थितवन्तः। मार्गे विनयः अकस्मात् अधः पतितवान्। वेदनाम् अनुभवन् हस्तपादौ इतस्ततः चालितुम् आरब्धवान् च।

भटाः सम्भ्रान्ताः सन्तः आश्चर्येण विनयं दृष्टवन्तः।

"अनामिका"

तदा विनयः क्षीणस्वरेण उक्तवान्– "वस्तुतः तेषु मिष्टकेषु विषं मिश्रितम् आसीत्। भवन्तः मां राजसमीपं नीत्वा रहस्यं निवेदयितुं वदन्तः चित्रहिंसया पीडयिष्यन्ति इति अहं जानामि। एतादृशस्य प्रसङ्गस्य परिहारार्थम् एव अहं सदा मया सह विषमिश्रितानि मिष्टकानि स्थापयामि। मिष्टकस्थं विषं झटिति परिणामं न प्रदर्शयति। किञ्चित्कालानन्तरम् एव विषस्य परिणामः लक्ष्यते। मया खादितम् इत्यतः भवन्तः अपि सन्देहं विना तानि खादितवन्तः। अहं तु मरणं प्राप्तुम् इच्छुः। भवन्तः अपि मरणं प्राप्स्यन्ति। मरणात् पूर्वं सत्यं वक्तव्यम् इत्यतः अहम् एतत्सर्वम् उक्तवान्" इति।

एतत् श्रुतवतां तेषां भटानां मुखं विवर्णं जातम्। विनयः तु मुखं विकृतं कुर्वन् वेगेन हस्तौ पादौ च चालयति।

"एषः गूढचरः अस्मान् वञ्चितवान्। वयं तु किञ्चित् विलम्बेन मिष्टकानि खादितवन्तः। अतः विषस्य परिणामस्य प्रकटनार्थम् इतोऽपि किञ्चित्कालः अपेक्षितः। ततः पूर्वं किमपि करणीयम्" इति उक्तवान् एकः भटः।

"एषः दुष्टः अत्रैव मृतः भवतु नाम। एतस्य शवं शृगालादयः खादिष्यन्ति। इदानीम् अस्माभिः वृथा समययापनं न करणीयम्। प्राणरक्षणोपायः चिन्तनीयः। समीपे ग्रामे कोऽपि वैद्यः स्यात्। तद्द्वारा चिकित्सां कारयाम तावत्" इति उक्त्वा ततः धावनम् आरब्धवान् अपरः।

"आम् आम्। अन्तिमश्वासपर्यन्तम् अपि प्रयत्नः करणीयः एव" इति उक्तवान् तृतीयः। ते त्रयः अपि ततः धावितवन्तः। तेषां दूरगमनानन्तरं विनयः उत्साहेन उत्थितवान्।

वस्तुतः तु मिष्टकेषु विष न आसीत् एव। मम उपायः फलितः इति सन्तोषम् अनुभवन् विनयः शिलायाः धारायां रज्जुं घर्षयन् छिन्नवान्। ततः स्वदेशं गतवान् सः।





# पञ्च प्रश्नाः

[४]

अनन्तरदिने धीरसिंहः चतुर्थं प्रश्नं ज्ञातुम् इच्छन् सुलोचनायाः समीपं गतवान्। सा तम् आदरेण स्वागतीकृत्य उपवेश्य उक्तवती – "त्रीणि विजयसोपानानि आरूढानि भवता। इदानीं चतुर्थं प्रश्नं शृणोतु तावत्। इतः नैर्ऋत्यदिशि पञ्चाशद्योजनदूरे मायामयः सुगन्धजलतडागः अस्ति। तस्य जन्मकारणं, पूर्ण रहस्यं च ज्ञात्वा आगन्तव्यम्" इति।

धीरसिंहः मासत्रयस्य अवधिं स्वीकृत्य ततः निर्गतवान्। अश्वम् आरुह्य नैर्ऋत्यदिशि सप्ताहं यावत् प्रयाणं कृतवान्। अष्टमे दिने तेन एकं नगरं दृष्टम्। नगरसीमायां कश्चन जीर्णकूपः आसीत्। तं परितः समूहरूपेण स्थित्वा जनाः अन्तः पश्यन्तः आसन्। तेषां मध्ये धनिकौ वृद्धदम्पती सकरुणं रोदनं कुर्वन्तौ आस्ताम्। धीरसिंहः कुतूहलेन तेषां समीपं गत्वा 'किं प्रवृत्तम्?' इति तत्रस्थम् एकं पृष्टवान्।

"अनयोः वृद्धदम्पत्योः एकः एव पुत्रः आसीत्। गुणशेखरः इति तस्य नाम। सः स्वभावेन अतीव समीचीनः। किन्तु गतसप्ताहे केन कारणेन इति न जानीमः, सः उन्मत्तः इव व्यवहरन् गृहात् निर्गत्य एतस्मिन् कूपे पतितवान्। तस्य गमनं निरोद्धुं केनापि न शक्तम्" इति उक्तवान् सः।

"शोचनीया वार्ता एषा! किन्तु मरणात् आत्मानं कः वा रक्षेत्? जातस्य मरणं ध्रुवम्। तथापि अकाले मरणं तु अनुचितम्। सर्वं



कूपस्य अन्तः जले सः अधोधः गतवान्। अन्ते तेन भूमिः प्राप्ता। सः तत्र सर्वत्र दृष्टिं प्रसारयन् हस्तेन स्पृशन् परीक्षितवान्। वामतः एकत्र बिलसदृशं द्वारं दृष्टवान् सः। जागरूकतया तस्य अन्तः गत्वा दक्षिणतः परिवृत्य गतवान् सः। तदा तस्य पुरतः विशालौ द्वारकवाटौ दृष्टौ। स्पर्शमात्रेण द्वारम् उद्घाटितम् अभवत्। सः साक्षात् अग्रे गतवान्।

तत्र परमरमणीयं किञ्चन उद्यानम् आसीत्। उद्यानस्य मध्ये सौन्दर्येण राजमानम् एकं विशालं भवनम् आसीत्।। तत् भवनं प्रविष्टवान् धीरसिंहः।

भवनस्य अन्तः स्थिताः दीपाः विचित्रं प्रकाशं प्रसारयन्तः आसन्। भवनस्य मध्यभागे चन्द्रशिलामये आसने उपविश्य काचित् तरुणी वीणां वादयन्ती मधुरेण स्वरेण गायन्ती आसीत्। तस्याः अभिमुखम् अन्यस्मिन् उन्नतासने उपविश्य तन्मयभावेन सङ्गीतं शृण्वन् आसीत् कश्चन तरुणः।

धीरसिंहस्य प्रवेशकारणतः सङ्गीतं स्थगितम्। वीणावादनम् अपि स्थगितम्। युवकः सचेतनतां प्राप्तवान् इव धीरसिंहम् आश्चर्येण पश्यति। 'वृद्धदम्पत्योः पुत्रः गुणशेखरः एषः एव' इति तर्कितवान् धीरसिंहः।

"गुणशेखर! भवतः मातापितरौ भवन्तम् अपश्यन्तौ अन्नपानं परित्यज्य विलपन्तौ

दैवाधीनम्। गतस्य विषये एवं विलपनेन किं प्रयोजनम्?" इति अनुकम्पेन उक्तवान् धीरसिंहः।

"किन्तु गुणशेखरस्य मरणे कोऽपि न विश्वसिति। सः मृतः चेत् एतावता शवेन उपरि आगन्तव्यम् आसीत्। कूपस्तु यथापर्व शान्तः एव दृश्यते" इति उक्तवान् सः पुरुषः।

"एवं वा!" इति उद्गारं प्रकट्य धीरसिंहः क्षणकालस्य मौनस्य अनन्तरं वृद्धदम्पत्योः समीपं गत्वा – "भवतोः चिन्ता मास्तु। भवतोः पुत्रं सकुशलं प्रत्यानेष्यामि अहम्" इति उक्त्वा स्वयं कूपस्य अन्तः उत्पतितवान्।

स्तः। भवान् तु अत्र सङ्गीतं शृण्वन् सुन्दर्याः सहवासे सन्तोषेण अस्ति! किम् एतत् उचितम्? किम् एतत् न्याय्यम्?" इति पृच्छन् धीरसिंहः गुणशेखरस्य समीपं गतवान्। गुणशेखरः तु लज्जया शिरः अवनमय्य स्थितः आसीत्। तस्य मुखे उन्मादचिह्नानि न दृश्यन्ते स्म।

धीरसिंहः तां सुन्दरीं पश्यन् उक्तवान् – "सुन्दरि! भवती का इति न जानामि अहम्। दर्शनेन ज्ञायते यत् भवती सत्स्वभावयुता इति। शक्तेः, सामर्थ्यस्य, सौन्दर्यस्य च उपयोगः परोपकारार्थं स्यात् इति ज्ञानिनः वदन्ति। अत्र तु भवत्याः सौन्दर्येण व्यामुग्धः गुणशेखरः मातापितरौ विस्मृतवान् अस्ति। पुत्रम् अपश्यतोः वृद्धदम्पत्योः दुःखस्य गभीरतां ज्ञातुं न शक्नोति वा भवती? करुणामयं खलु स्त्रीहृदयम्? कृपया एतस्य मातापित्रोः विषये चिन्तयतु" इति।

तदा सा सुन्दरी उक्तवती – "श्रीमन्! भवता सत्यम् एव उक्तम्। किन्तु अहं भूलोकं प्रविशामि चेत् मम दिव्यशक्तिः नश्यति। अहं मानवमात्रं भवामि। यदि एषः गत्वा मातापितरौ सान्त्वयित्वा प्रत्यागच्छेत् तर्हि न तत्र आक्षेपः मम। इतः परम् अपि एवम् एव भवितुम् अर्हति" इति।

तस्याः अनुमतिं प्राप्य धीरसिंहः गुणशेखरेण सह यथा आगतं तथैव प्रतिगत्य कूपतः उपरि आगतवान्।



अकस्मात् कूपे प्रत्यक्षीभूतौ तौ दृष्ट्वा जनाः आनन्देन आश्चर्येण च उद्गारं प्रकटितवन्तः। पुत्रस्य दर्शनम् इतः परं न भविष्यति इति भावितवतोः वृद्धदम्पत्योः हर्षः तु सीमातीतः। तौ धीरसिंहस्य धैर्यं, साहसं, परोपकारबुद्धिं च पुनः पुनः प्रशंसन्तौ प्रीत्या आशिषा अनुगृहीतवन्तौ।

प्रवृत्तं सर्वं निवेद्य वृद्धदम्पत्योः इतरेषां च अनुमतिं प्राप्य ततः अग्रे गतवान् धीरसिंहः। दिनत्रयस्य प्रयाणस्य अनन्तरं सः अन्यत् नगरं दृष्टवान्। सः नगरं प्रविश्य अभिमुखम् आगतं कञ्चन वृद्धं पृष्टवान् – "भवान् सुगन्धजलतटाकं जानाति वा?" इति।

"तद्विषये मया श्रुतम्। तत्र गतः कोऽपि



अद्यावधि न प्रत्यागतः। तत्र गमनं प्राणत्यागः च उभयम् अपि समानम्" इति उक्तवान् सः वृद्धः।

"केन मार्गेण तत्र गन्तव्यम् इति सूचयतु कृपया" इति प्रार्थितवान् धीरसिंहः।

"मरणस्य मार्गं प्रदर्शयन् पापं सम्पादयितुं न इच्छामि अहम्" इति उक्तवान् सः वृद्धः।

तथापि धीरसिंहेन आग्रहेण यदा पृष्टं तदा सः वृद्धः – "एतस्य नगरस्य दक्षिणद्वारम् अतिक्रम्य दशयोजनदूरं गतं चेत् अग्रे मार्गद्वयं दृश्यते। भवान् वामतः स्थितं मार्गम् अनुसरतु। अग्रे गमनेन भवान् कञ्चन पर्वतं द्रक्ष्यति। पर्वतस्य अपरस्मिन् पार्श्वे विरजापुरम् अस्ति। तस्य नगरस्य मध्यभागे निवसतः राज्ञः आधीन्ये स च मायातटाकः अस्ति इति श्रूयते। मणिमाणिक्येषु तस्य राज्ञः व्यामोहः इति श्रुतं मया। अतः तादृशानि उपायनानि दत्त्वा तं सन्तोषयति चेत् भवतः कार्यं कदाचित् सिध्येत्। कार्यं न सिद्धं चेत् मरणं तु निश्चितम्। अतः विचिन्त्य पदं स्थापयतु। देवः भवन्तम् साफल्येन अनुगृह्णातु" इति उक्त्वा धीरसिंहम् आशिषा अनुगृहीतवान्।

धीरसिंहः वृद्धेन यथा सूचितं तथा गच्छन् विरजापुरं प्राप्तवान्। मार्गे तेन अनेकाः आपदः सम्मुखीकृताः। तथापि धैर्यच्युतिम् अप्राप्नुवन् सः तत् नगरं प्राप्य महाराजं दृष्ट्वा रत्नम् एकम् उपायनरूपेण दत्तवान्। महाराजः तत् स्वीकृत्य हस्तसङ्केतेन एव धीरसिंहम् – 'इतः गन्तुम् अर्हति भवान्' इति सूचितवान्।

एतदनन्तरं षड् दिनानि अपि एवम् एव गतानि। अन्ते धीरसिंहस्य सहनया उपायनेन च सन्तुष्टः राजा उक्तवान् – "प्रतिदिनम् अपि एकैकं रत्नं यच्छन् अस्ति खलु भवान्? प्रतिफलरूपेण मत्तः किम् इच्छति भवान्? वदतु तावत्" इति।

"प्रार्थितं दीयते इति वचनं दत्तं चेत् अपेक्षां प्रकटयामि" इति उक्तवान् धीरसिंहः।

"अपेक्षां निस्सन्देहं प्रकटयतु। सा अपेक्षा पूरिता भविष्यति एव" इति आश्वासनं दत्तवान् राजा।

"तर्हि अहं मायामयं सुगन्धजलतडागं

द्रष्टुम् इच्छामि। एतदर्थम् अनुमतिः दातव्या" इति निवेदितवान् धीरसिंहः।

एतत् श्रुत्वा क्षणकालं स्तब्धः राजा आत्मानं समाश्वास्य उक्तवान् – "मायातडागस्य दर्शने भवन्तं ये प्रेरितवन्तः ते वस्तुतः अपि भवतः शत्रवः एव। यतः तत्र गत्वा मायया बद्धः कोऽपि अद्यावधि न प्रत्यागतः। अतः एषा अपेक्षा मास्तु भवतः" इति।

किन्तु धीरसिंहः मायातडागदर्शनविषये अविचलः आसीत्। अतः अनन्यगतिकः राजा भटौ आहूय धीरसिंहं तडागपर्यन्तं प्रापयितुम् आज्ञां कृतवान्।

नगरस्य दक्षिणदिशि महतः द्वारस्य पार्श्वे चत्वारः भटाः खड्गं गृहीत्वा स्थितवन्तः आसन्। तेषां पार्श्वे फलके लिखितम् आसीत् यत् जीवितुम् इच्छन् कोऽपि अन्तः न प्रविशेत् इति।

भटाः द्वारम् उद्घाटितवन्तः। धीरसिंहः अन्तः गतवान्। तत्समनन्तरम् एव द्वारं स्वयं पिहितम् अभवत्।

धीरसिंहः द्वित्राणि पदानि अग्रे गत्वा परिवृत्य दृष्टवान्। तत्र तेन द्वारं वा भित्तिः वा न दृष्टम् एव। सर्वत्र विशालम् अङ्गणं दृश्यते। तावता कश्चन जटाधारी वृद्धः धीरसिंहस्य पुरतः प्रत्यक्षीभूय – "स्वागतं भवतः। अत्र आगतं तटाके स्नापयामि अहम्। एषा मम वृत्तिः" इति उक्तवान्। धीरसिंहः तम् अनुसृतवान्।

तावता विशालं भवनं प्रत्यक्षं जातम्।





तस्य मध्ये सुगन्धप्रसारकः तडागः आसीत्। तं प्रदर्शयन् सः विचित्रवृद्धः उक्तवान् – "तडागे अवतीर्य मध्यभागं प्राप्नोतु। अहं भवन्तम् अनुसरामि" इति।

धीरसिंहः तडागं प्रविष्टवान्। सः विचित्रः पुरुषः धीरसिंहस्य उपरि कलशेन त्रिवारं जलं पातितवान्। ततः अदृश्यः अभवत् च। तेन पातितं जलं क्षणे क्षणे वर्धमानं सत् धीरसिंहस्य कण्ठपर्यन्तम् आगतम्। धीरसिंहः आत्मनः रक्षणार्थम् उपरि दृष्टिं प्रसारितवान्। तत्र छदिप्रदेशे शृङ्खला काचित् आसीत्। धीरसिंहः झटिति जले एकवारं निमज्ज्य जलं ताडयन् उपरि उत्प्लुत्य तां शृङ्खलां गृहीतवान्। तत्क्षणे तत्र कश्चन महान् शब्दः श्रुतः। तेनैव सह तत्र सर्वत्र अन्धकारः प्रसृतः। किं प्रवर्तते इति ज्ञातुम् इच्छन् धीरसिंहः परितः पश्यति। इदानीं तत्र न भवनं, न सुगन्धजलं, न वा तडागः। सः अङ्गणे तृणानाम् उपरि स्थितः अस्ति।

आश्चर्यम् अनुभवन् धीरसिंहः अग्रे प्रस्थितवान्। अन्धकारः कथं कदा अपगतः इति न ज्ञातवान् सः। इदानीं तस्य पुरतः उन्नतः कश्चन मण्डपः दृश्यते स्म। मण्डपं परितः चन्द्रशिलानिर्मिताः विग्रहाः आसन्। मण्डपात् अनतिदूरे शिलायाः उपरि एकं धनुः, बाणत्रययुतं तूणीरं च दृश्यते स्म।

धीरसिंहः मण्डपस्य समीपं गतवान्। मण्डपमध्ये एकं सुवर्णमयं पञ्जरम् आसीत्। पञ्जरे सुन्दरः शुकः आसीत्। मण्डपपार्श्वे भित्तौ शिलाफलके एवं लिखितम् आसीत् – "पञ्चशतवर्षेभ्यः पूर्वम् अमरकीर्तिः नाम राजा मृगयार्थम् एतं प्रदेशम् आगतवान्। अत्र तेन कश्चन अपूर्वः जीवमणिः प्राप्तः। स्वस्य अनन्तरं स्वसदृशेन समर्थेन स च मणिः प्राप्तव्यः इति उद्देशेन सः स्वमायाशक्त्या सुगन्धजलतडागम् एतं परिसरं च निर्माय मणिं सुरक्षितं स्थापितवान्। शिलायाः उपरि स्थिते धनुषि बाणं संयोज्य प्रयत्नत्रयाभ्यन्तरे यः पञ्जरस्थस्य शुकस्य वामनेत्रम् अपनयति सः मायां विजित्य जीवमणिं प्राप्स्यति। प्रयत्ने असफलः च शिलाविग्रहरूपं प्राप्स्यति" इति।

धीरसिंहः झटिति शिलायाः उपरि स्थितं धनुः उन्नीय तत्र बाणं योजयित्वा शुकस्य वामनेत्रं लक्ष्यीकृत्य प्रयुक्तवान्। किन्तु स च प्रयत्नः व्यर्थः जातः। तावता तस्य जानुपर्यन्तः भागः शिलारूपतां प्राप्तवान् आसीत्। सः द्वितीयवारं बाणप्रयोगं कृतवान्। एषः अपि प्रयत्नः व्यर्थः जातः। कटिपर्यन्तः भागः शिलामयः जातः। तदा पञ्जरस्थः शुकः उपहसन् अवदत् – "धीरसिंह! लक्ष्यभेदनं कर्तुं न शक्नोति भवान्। किमर्थं वृथा प्रयत्नः?" इति।

धीरसिंहः धैर्यच्युतः न जातः। सः शुकस्य चलनवलनं जागरूकतया परिशीलयन् तृतीयं बाणं प्रयुक्तवान्। बाणः लक्ष्ये सम्यक् लग्नः। क्षणमात्रेण तत्र अशनिपातः जातः इव। मेघगर्जनं श्रुतम्। तडित् दृष्टा। भूमिः कम्पिता जाता।

एतत्सर्वम् आश्चर्येण पश्यन् धीरसिंहः तटस्थरूपेण स्थितवान्। मण्डप-पञ्जर-शुकादयः अदृश्यतां गताः आसन्। समीपे एव जीवमणिः प्रकाशते स्म। शिलारूपं गतः तदीयः कटिपर्यन्तः भागः पूर्वस्थितिं प्राप्तवान् आसीत्।

धीरसिंहः जीवमणिं हस्तेन स्वीकृत्य सर्वेषां विग्रहाणाम् उपरि स्थापयन् गतवान्। विग्रहाः सर्वे राजकुमाररूपेण परिवृत्ताः। सर्वे राजकुमाराः धीरसिंहस्य उपकारं कृतज्ञतापूर्वकं स्मरन्तः स्वदेशं गतवन्तः।

धीरसिंहः कौशाम्बीं प्रत्यागत्य तडागस्य उत्पत्तिकारणं पूर्वापरं च सुलोचनां निवेदितवान्। आत्मनः अनुभवान् अपि विस्तरेण निवेदितवान्।

तदा राजकुमारी तृप्तिं प्रकटयन्ती – "भवता उक्तं सत्यम् एव। मायाबन्धात् विमुक्ताः राजकुमाराः भवतः गुणगानं यत् कुर्वन्ति तदेव अत्र प्रमाणम्। श्वः पुनरपि भवान् मां पश्यतु। अन्तिमं पञ्चमं च प्रश्नं श्वः श्रावयिष्यामि" इति उक्त्वा धीरसिंहं विश्रान्तिगृहं प्रति प्रेषितवती।

(अग्रिमसञ्चिकायां समाप्ता भविष्यति।)






# राजयोगः

कठिनतरस्य अपि प्रश्नस्य उत्तरम् अहं लीलया कथयिष्यामि इति गर्वं वहन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! विघ्नाः पुनः पुनः आपतन्ति चेदपि आरब्धं कार्यं समापनीयम् एव इति भावना अभिनन्दनीया एव। कदाचित् सौभाग्यवशात् द्विगुणितं फलम् अपि प्राप्येत। तादृशं सम्भाव्यं फलं ज्ञातुं बुद्धिमत्ता अपेक्षिता। योग्येन प्रमाणेन प्रयत्नः अपि अपेक्षितः। अन्यथा सिद्धं फलम् अपि हस्तगतं न भवेत्। अत्र उदाहरणरूपेण शिवनामकस्य अजपालस्य कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः निश्चयेन अपगतः भविष्यति" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

शान्तिपुरराज्यस्य कस्मिंश्चित् ग्रामे शिवनामकः कश्चन अजपालः तरुणः निवसति स्म। तस्य मातापितरौ बान्धवाः वा न सन्ति। ग्रामीणान् अजान् मेषान् च सः चारणार्थं प्रतिदिनं प्रातः पर्वतं प्रति नयति, सायं प्रत्यानयति च। एषा तस्य वृत्तिः। किन्तु तस्य धैर्यं तु असदृशम् आसीत्।

कदाचित् सः पर्वतमूले अजान् मेषान् च चारयन् आसीत्। तत्समये पर्वतशिखरात् अधः आगच्छन्तं कञ्चन संन्यासिनं दृष्टवान् सः। स च पर्वतः शिलामयः, कण्टकैः विषसर्पैः च व्याप्तः। अतः पर्वतस्य उपरि कोऽपि न गच्छति। एतादृशस्य पर्वतस्य शिखरात् कण्टकानाम् उपरि, पुष्पाणाम् उपरि इव लीलया आगच्छन्तं संन्यासिनं दृष्ट्वा सः आश्चर्यचकितः। संन्यासिनः साहसं तदेकदृष्ट्या पश्यन् अस्ति सः।

पर्वतात् अधः आगच्छन् मुनिः शिवं दृष्ट्वा मन्दहासं प्रकटितवान्। शिवः किञ्चित् अग्रे गत्वा तं भक्त्या नमस्कृतवान्।

मुनिः शिवम् आशिषा अनुगृह्य– "भोः, मासाभ्यन्तरे भवान् एकस्य देशस्य राजा भविष्यति। तदर्थं सिद्धः भवतु" इति उक्त्वा अग्रे गच्छन् शिवस्य दृष्टिपथात् दूरं गतवान्।

मुनेः वचनं श्रुत्वा शिवः नितराम् आश्चर्यचकितः। 'अजमेषादीनां चारणेन उदरम्भरणं कुर्वन् अहं कथं वा राजा भवेयम्?' इति आलोचयति सः। 'तेजस्विनः मुनेः वचनं मिथ्या न भवेत्' इत्यपि भावना भवति तस्य मनसि। ग्रामं गतः सः तद्दिनस्य घटनां ग्रामीणान् कांश्चन निवेदितवान्। एषा वार्ता क्षणमात्रेण सर्वत्र प्रसृता। सर्वे उदरोपपीडं हसितवन्तः। केचन शिवम् उन्मत्तं भावितवन्तः। अन्ये केचन– 'सः वृक्षस्य अधः सुप्तः स्वप्नं दृष्टवान् स्यात्' इति उक्तवन्तः।

शशिधरः नाम सौचिकः अपि एतत् श्रुतवान्। शिवं विशेषतः क्रीडयितुम् इच्छन् सः शिवम् उक्तवान्– "भोः, भवान् सद्यः एव राजा भविष्यति खलु? भाविनः राज्ञः एषः वेषः सर्वथा अनुचितः। राजयोग्यं वस्त्रम् अहं

सीवयित्वा ददामि। भाविनः राज्ञः वेषादयः अपि तद्योग्यतानुगुणं स्युः" इति।

'एतदपि सत्यम् एव' इति आलोच्य शिवः सञ्चितेन समग्रेण धनेन ?मूल्यानि वस्त्राणि क्रीतवान्। सौचिकः शशिधरः शिवस्य मूर्खताविषये मनसि एव हसन् वस्त्रं सीवयित्वा दत्तवान्। राजवेषेण विराजमानं शिवं दृष्ट्वा ग्रामीणाः सर्वे हसितवन्तः।



भीमेशः नाम मल्लः शिवं दृष्ट्वा– "भोः मूर्ख शिव! खड्गचालनम् अपि अजानन् कीदृशः राजा भवान्? खड्गचालनं दूरे तिष्ठतु, खड्गः एव भवतः समीपे नास्ति खलु?" इति उपहसितवान्।

'एतदपि सत्यम् एव' इति आलोच्य शिवः आयुधचालनस्य शिक्षकं विश्वकर्माणं दृष्ट्वा– "भोः, अहं भावी राजा अस्मि। मां किञ्चित् खड्गविद्यां पाठयतु" इति प्रार्थितवान्।

"अवश्यं पाठयामि। प्रथमं खड्गं सम्पाद्य आनयतु" इति हसन् उक्त्वा शिवं प्रोत्साहितवान् विश्वकर्मा।

किन्तु शिवेन स्वसमीपे विद्यमानं सर्वं धनं राजवेषनिमित्तम् एव व्ययितम् आसीत्। अतः सः खड्गसम्पादनं कथम् इति बहुधा विचिन्त्य अन्ते भैरवनामकस्य लोहकारस्य समीपं गत्वा उक्तवान्– "भोः, भैरव! अहं सद्यः एव राजा भविष्यामि। मम कश्चन उत्तमः खड्गः अपेक्षितः। भवान् कृत्वा ददातु। यदा अहं राजा भविष्यामि तदा योग्येन पारितोषिकेण भवन्तं सत्करिष्यामि" इति।

भैरवः हसन् उक्तवान्– "भोः, मम मेषाः इतोऽपि गृहं न आगताः। तान् अन्विष्य आनयतु प्रथमम्। तदनन्तरम् अहं खड्गं निर्माय दास्यामि" इति। भैरवस्य वचनानुगुणं शिवः मेषाणाम् अन्वेषणं कुर्वन् ग्रामात् बहुदूरं गतवान्। तत्र तिन्त्रिणीवने तेन ते मेषाः प्राप्ताः। तैः सह सः ग्रामं प्रति प्रस्थितवान्।

मार्गे कश्चन रथः सम्मुखम् आगतः। रथे शान्तिपुरस्य युवराज्ञी नलिनीदेवी उपविष्टवती आसीत्। सा राजवेषेण स्थितं मेषचारणे उद्युक्तं शिवं दृष्ट्वा रथं

स्थगयित्वा रथात् अवतीर्य शिवस्य पुरतः स्थित्वा प्रणम्य– "कस्य देशस्य राजकुमारः भवान्? एवं मेषचारणं किमर्थं करोति?" इति हसन्ती पृष्टवती।

तस्याः सौन्दर्यातिशयेन वशीकृतः शिवः हसन् धार्ष्ट्येन उक्तवान्– "अहम् इदानीं न कस्यापि देशस्य राजकुमारः, राजा वा। किन्तु अचिरात् एव राजा भविष्यामि। तदा परमसुन्दरी भवती मम अनुरूपा पत्नी भवितुम् अर्हति। सत्यं खलु एतत्?" इति।

एतत् श्रुत्वा कुपिता राजकुमारी समीपस्थान् भटान्– "एतं मूर्खं बद्ध्वा आनयन्तु" इति आज्ञाप्य रथम् आरुह्य अग्रे प्रस्थितवती।

राजभटाः शिवस्य हस्तौ रज्ज्वा बद्ध्वा आत्मना सह तं नीतवन्तः।

किञ्चिद्दूरं गमनानन्तरं शराम्बुधिः नाम पर्वताकारकः राक्षसः तेषां सम्मुखम् आगतः। तस्य शिरसि किरीटं, शरीरे च विविधानि आभरणानि आसन्। कटिप्रदेशे खड्गः दृश्यते स्म। हस्ते च रत्नखचिता गदा आसीत्।

राक्षसं दृष्ट्वा राजभटाः, नलिनीदेव्याः परिचारिकाः, रथचालकः च भीत्या आक्रोशनं कुर्वन्तः पलायितवन्तः।

बन्धने स्थितं शिवं पृष्टवान् सः शराम्बुधिः राक्षसः– "अये मानव! कस्य अपराधस्य निमित्तम् एतादृशं दण्डनं भवतः?" इति।

शिवः तु धैर्येण– "मया कोऽपि अपराधः



न कृतः। एषा मम बन्धनम् आज्ञापितवती" इति वदन् प्रवृत्तं समग्रं निवेदितवान्।

तदा राक्षसः नलिनीदेवीं पश्यन्- "युवराज्ञि! मम नाम शराम्बुधिः इति। राक्षसलोकस्य राजा अहम्। भूलोके ये उत्तमाः गुणाः दृश्यन्ते ते मम लोके अपि व्यवहारे आनेतव्याः इति उद्देशेन भूलोकम् आगतवान्। मुनिः यदा एतम् आशिषा अनुगृहीतवान् तदारभ्य एतं परिशीलयन् अस्मि। एतस्य वचने अयुक्तता काऽपि नास्ति इति भाति मम। एषः यदा राजा भविष्यति तदा भवती एतं यदि अङ्गीकुर्यात् तर्हि विवाहः भवितुम् अर्हति इति तस्य वचनस्य आशयः। अत्र किम् अनौचित्यम्? किमर्थम् एतस्य विषये कोपः?" इति पृष्टवान्।

नलिनीदेवी पुनरपि कोपेन उक्तवती- "एषः तु अजपालः। अहं तु राजकुमारी। मम पिता सद्यः एव दिवङ्गतः इत्यतः अहम् एव राज्ञी अस्मि अपि। वेषधारणेन कोऽपि राजार्हतां प्राप्नुयात् किम्? यस्मिन् वीरलक्षणं लेशमात्रम् अपि नास्ति तादृशः मम परिणयप्रस्तावं करोति इत्येतत् किम् अनुचितं न? किम् एतत् मम अपमानकरं न?" इति।

"एवं वा? वीरत्वं तु पौरुषसाध्यम्। पञ्चदशसु दिनेषु अहम् एतं वीरं करिष्यामि। यदि एषः वीरः भवेत् तर्हि एतं परिणेतुं सिद्धा वा भवती?" इति हसन् पृष्टवान् राक्षसः।

नलिनीदेवी क्षणकालम् आलोच्य उक्तवती- "मम राज्यस्य उपरि





आक्रमणार्थं सिंहपुरस्य राजा विक्रमसिंहः प्रस्थितः अस्ति। तं यदि एषः पराजयेत् तर्हि अहम् एतं परिणयेयम्" इति।

"अस्तु तावत्" इति उक्त्वा राक्षसः शिवेन सह ततः अदृश्य अभवत्। नलिनीदेवी परिवारेण सह राजधानीं गतवती।

दशसु एव दिनेषु राक्षसः गदायुद्धं, धनुर्विद्यां, खड्गकौशलम्, अश्वारोहणम् इत्याद्याः राजोचितविद्याः शिवं पाठितवान्। तासु सर्वासु शिवः समर्थः जातः।

अनन्तरं शिवः राक्षसः च विक्रमसिंहस्य सैन्यस्य समीपं गतवन्तौ। राक्षसस्य दर्शनमात्रेण भीताः सर्वे सैनिकाः ततः पलायितवन्तः। विक्रमसिंहः खड्गम् उन्नीय शिवस्य उपरि आक्रमणं कृतवान्। तयोः मध्ये किञ्चित्कालं खड्गयुद्धं प्रवृत्तम्। युद्धे विक्रमसिंहस्य खड्गं शिवः पातितवान्। विक्रमसिंहः अश्वं परिवृत्य ततः पलायितवान्।

अनन्तरदिने राक्षसः शिवेन सह नलिनीदेव्याः समीपं गत्वा उक्तवान्– "शिवः विक्रमसिंहं पराजितवान् अस्ति। विक्रमसिंहः रणरङ्गात् राजधानीं प्रति पलायितवान्" इति।

तदा नलिनीदेवी उक्तवती– "भवतः दर्शनमात्रेण विक्रमसिंहस्य सेना पलायिता। विक्रमसिंहः असहायः जातः। एतादृशस्य पराजयः न क्लेशाय। अत्र शिवेन विशेषतः शौर्यं न प्रदर्शितम्" इति।

तदा राक्षसः उक्तवान्– "भवती चतुरा अस्ति। किन्तु आवयोः विषये भवती राजकीयतन्त्रस्य प्रयोगं मा करोतु। तदेव क्षेमकरं भवत्याः" इति।

यावत् नलिनीदेवी किमपि वक्तुम् उद्युक्ता तावता तत्र आगतः कश्चन राजभटः– "महाराज्ञि! विक्रमसिंहः अश्वात् पतितः मृतः इति श्रूयते। तस्य दुष्टशासनेन प्रजाः सर्वाः खिन्नाः आसन्। तं पराजितवन्तम् एव राजपदे स्थापयितुं मन्त्रि-सेनापतिप्रभृतयः निश्चितवन्तः सन्ति। सद्यः प्राप्ता निश्चितवार्ता एषा" इति निवेदितवान्।

एतत् श्रुत्वा नलिनीदेवी शिवं कटाक्षेण पश्यन्ती लज्जया शिरः अवनमय्य उक्तवती–

# चन्दमामानुबन्धः – ७
# ज्ञानभाण्डागारम्

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम् –



## महाराणा प्रतापः

प्रतापः, मेवाडराजस्य उदयसिंहस्य पुत्रः १५४० तमे वर्षे मेमासस्य नवमे दिनाङ्के जातः, यश्च अयम् अनन्तरकाले महाराणा प्रतापसिंहः इति प्रसिद्धः, रजपूतजनानां श्रेष्ठः नायकश्च जातः।

- यदा प्रतापः मेवाडस्य महाराणा (राजा) जातः तदा अकबरः स्वसाम्राज्यस्य विस्तरणार्थं प्रयतमानः आसीत्। रजपूतराजभ्यः महान् विरोधः आगतः। तथापि सः राज्यानि सामोपायेन युद्धेन वा एकैकशः वशीकुर्वन् अग्रे गतवान्। किन्तु एकः राजा तं तिरस्कृतवान्, यस्य च नाम महाराणा प्रतापः इति।

१५७६ तमे वर्षे एप्रिलप्रथमदिनाङ्के हल्दीघाट्प्रदेशे महाराणाप्रतापस्य सैन्यस्य, मानसिंहस्य नेतृत्वेन चाल्यमानस्य अकबरसैन्यस्य च मध्ये घोरं युद्धं प्रवृत्तम्। प्रतापः असीमधैर्येण युद्धं कृतवान्। तस्य विजयः आसन्नप्रायः आसीत् अपि। तावता मोघलाः नूतनस्य सैन्यस्य साहाय्यं प्राप्तवन्तः। दुर्दैववशात् प्रतापस्य अश्वः चेतकः व्रणितः जातः। व्रणितः अश्वः स्वयजमानं सुरक्षितम् अन्यत्र अनयत्।

एतस्य उल्लेखार्हस्य युद्धस्य अनन्तरं प्रतापः तूष्णीं न स्थितवान्। नूतनं दुर्गं निर्माय तत्र तिष्ठन् मोघलैः वशीकृतानि दुर्गाणि स्वायत्तीकृतवान्। सः १५९७ तमे वर्षे यद्यपि दिवङ्गतः, तथापि भारतमातुः श्रेष्ठस्य पुत्रस्य एतस्य स्मरणं भारतीयानां मनसि चिरं तिष्ठति।

## सः कः स्यात्?

दक्षिणभारतस्य श्रेष्ठः देवालयः कश्चन देहलीमहाराजेन (सुल्तान्) लुण्ठितः। महाराजस्य भटाः देवालयस्थेन अमूल्येन ऐश्वर्येण सह उत्सवमूर्तिम् अपि नीतवन्तः।

एतदनन्तरम् अल्पे एव काले श्रेष्ठः संन्यासी कश्चन देहलीनगरं गतवान्। स्वकीयेन निरन्तरप्रयत्नेन, महाराजः मूर्तिं यथा प्रत्यर्पयेत् तथा कारितवान्। मूर्तिः तत्समये महाराजस्य पुत्र्याः अधीना आसीत्। सा संन्यासिने मूर्तिम् अर्पितवती।

संन्सासी दक्षिणभारतं प्रति प्रतिप्रयाणम् आरब्धवान्। काचित् अवगुण्ठनवती स्त्री तस्य शकटम् अनुसरन्ती आसीत्। दिनानि कानिचन गतानि। सा इतोऽपि अनुसरन्ती एव अस्ति। अन्ते संन्यासी ज्ञातवान् यत् सा न अन्या, अपि तु महाराजस्य पुत्री एव इति।

सा तस्मिन् दैवते तावत् आसक्ता आसीत् यत् मूर्तिं विना सा स्थातुं न अर्हति स्म। दयामयः संन्यासी मन्दिरं प्रति तस्याः आगमनम् अङ्गीकृतवान्। अनन्तरकाले सा तत्रैव मृता। तस्याः गौरवार्थं केचन इस्लाम् आचाराः मन्दिरे आरब्धाः।

वदन्तु, सः संन्यासी कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

विज्ञानविनोदः

# जलस्य वक्रीभवनम्



**एवं कुर्वन्तु –**

कृशा अखण्डा ऋजुः धारा यथा निर्गच्छेत् तथा नलिकां प्रवर्तयन्तु। वायुना पूर्णं फूद्गं (Balloon) शुष्केण ऊर्णवस्त्रेण वेगेन घर्षयित्वा फूद्गं जलधारायाः समीपं नयन्तु।



**किं भवति, किमर्थं च भवति?**

अधः पतन्त्यां जलधारायाम् एकत्र वक्रता दृश्यते। जलधारा फूद्गदिशि आकृष्टा सती वक्रीभूय पतन्ती अस्ति इति स्पष्टं ज्ञायते।

जलधाराम् एवं विचालयितुम् अल्पं बलं पर्याप्तं भवति। ऊर्णवस्त्रेण फूद्गः घर्षितः जातः इत्यतः फूद्गे विद्युदंशाः सङ्गृहीताः भवन्ति। एषा विद्युच्छक्तिः धाराम् आकर्षति। एषा विद्युत् 'स्थिरविद्युत्' इति उच्यते। ऊर्णवस्त्रेण घर्षणात् सङ्क्रान्तैः फूद्गशरीरे लग्नैः कणैः (Electrons) एषा विद्युत् उत्पद्यते। एवं सङ्गृहीताः इलेक्ट्रान्कणाः मन्दगत्या वायुं प्रविशन्ति। एवं चलनसमये यस्यां दिशि ते चलन्ति तस्यां दिशि स्थितं वस्तु किञ्चित् आकर्षन्ति।

फूद्गम् इतोऽपि समीपं नयामः चेत् जलधारा अधिकवक्रतां प्राप्य फूद्गस्य उपरि एव पतति। एवम् आर्द्रः फूद्गः पुनः जलधाराम् आक्रष्टुं किं शक्नुयात्? परीक्ष्य स्वयं जानन्तु।

कागदखण्डानां समीपं, तण्डुलस्य गोधूमस्य वा तुषस्य समीपं च उपर्युक्तं विद्युच्छक्तियुक्तं फूद्गं नयन्तु। तेन कः परिणामः दृश्यते? परीक्ष्य जानन्तु तावत्।



विश्ववैचित्र्यम्

# अलेक्साण्ड्रिया दीपस्तम्भः

फारोस्द्वीपस्य अलेक्साण्ड्रियानगरस्य समीपे एकः महान् दीपस्तम्भः (दीपगृहम्) टोलेमि फिलेडफस्वर्येण क्रि.पू. ३ शतके निर्मितः आसीत्। अस्य अनेके अट्टाः आसन्। उपरितनाः अट्टाः अधस्तनानाम् अट्टानाम् अपेक्षया आकारेण अल्पाः आसन्। एतस्य दीपस्तम्भस्य औन्नत्यं ५२० द्वादशाङ्गुलम् आसीत्। एतस्य उपरि ज्वालितः दीपः ३० मैल्दूरतः अपि दृश्यते स्म। भूकम्पनवशात् समुद्राघातवशात् च क्रमशः एषः दीपस्तम्भः क्षयं प्राप्नोत्। १३ शतकपर्यन्तम् अपि एतस्य अवशेषाः दृश्यमानाः आसन्।

अपूर्वाः जागतिकघटनाः

# चिन्तनं चिन्तकम्

प्राचीनकालात् अपि सम्प्रदायवादिनां प्रगतिपराणां च मध्ये सङ्घर्षः प्रचलति एव। मानवः विचारस्वातन्त्र्येण वाक्स्वातन्त्र्येण च केवलं प्रगतिं साधयितुम् अर्हति। सम्प्रदायवादिनः एतत् तत्त्वं सर्वथा न अवगच्छन्ति।



क्रि.पू. ६ शतके अथेन्स्नगरे साक्रेटीस्नामकः तत्त्वज्ञानी आसीत्। सः तत्कालीनेभ्यः सम्प्रदायवादिभ्यः सर्वथा न अरोचत। यतः साक्रेटीस् नगरीयान् युवकान् चिन्तनक्रमं बोधयन् अन्धविश्वासं दूरीकुर्वन् तान् शिक्षयन् आसीत्।

नगरीयाः युवकाः तु तत्त्वज्ञानिनं साक्रेटीसं परमबुद्धिमन्तं भावयन्ति स्म। किन्तु

# अमरं करोति



सम्प्रदायवादिनः 'सः क्रूरः उन्मत्तः च' इति उद्घुष्टवन्तः। 'सः युवकानां बुद्धिं कलुषयन् अस्ति' इति सार्वजनिकरूपेण प्रचारं कृतवन्तः। ५०१ न्यायाधीशाः तस्य विचारणं कृतवन्तः। साक्रेटीस् आत्मनः उपरि आरोपितान् दोषान् बुद्धिमत्तया युक्त्या च निराकृतवान्। किन्तु न्यायाधीशाः ६० सङ्ख्याकेन बहुमतेन तम् अपराधिनं निर्णीतवन्तः। तैः तस्य मरणदण्डनं विहितम्। हेम्लाक्नामकं विषं पीत्वा मरणं प्राप्तव्यम् आसीत् तेन।

तस्य अनुयायिनः अभिमानिनः च तं परितः स्थितवन्तः। सर्वे अश्रूणि स्रावयन्ति, किन्तु साक्रेटीस् मन्दहासं प्रकटयति। सः स्वकीयान् अनुयायिनः 'दुःखं न उचितम्' इति उपदिशन् उक्तवान्– "मरणं नाम काचित् शून्या स्थितिः, अथवा इहलोकात् लोकान्तरं प्रति जीवात्मनः गमनम्। ... इदानीम् अस्माकं वियोगकालः सन्निहितः। वयं स्वमार्गेण गच्छेम, भवन्तः जीवनं प्रति, अहं मरणं प्रति। कः मार्गः श्रेष्ठः इति तु भगवान् एव जानाति" इति।

सर्वेषां हितम् आशंसन् साक्रेटीस् हसन् हेम्लाक्विषस्य अन्तिमं बिन्दुं पीत्वा मूर्च्छां गतवान्। प्राणैः वियुक्तः जातः अपि।

एवम् अथेन्सनगरीयाः क्षुल्लकाः केचन जनाः स्वनगरस्य बुद्धिमन्तं मनुष्यं मरणं प्रापयन्तः विजयिनः जाताः।

## भारतीये इतिहासे कटाक्षपात:



१. भारतस्य कस्यचित् राज्यस्य प्रधानामात्यः वैयक्तिकसङ्ग्रहस्य आधारेण एकं वस्तुसङ्ग्रहालयं स्थापितवान्। स च सङ्ग्रहालयः इदानीं राष्ट्रियसङ्ग्रहालयेषु अन्यतमः अस्ति। तस्य अपूर्वस्य सङ्ग्राहकस्य नाम किम्?
२. भारतस्य कः प्रसिद्धः देवालयः आक्रामकैः शासकैः च आहत्य षड्वारं नाशितः?
३. किंनिमित्तम् एतस्य देवालयस्य प्रदेशः प्रसिद्धः अस्ति?
४. जागतिकप्रसिद्धिं प्राप्तवन्तौ तौ गुहासमूहौ कौ, यत्र च केभ्यश्चित् वर्षेभ्यः पूर्वं १७० गुहाः अन्विष्टाः?
५. आरम्भे 'महाभयङ्करः' इति नाम प्राप्य, अनन्तरकाले 'परमधार्मिकः' इति ख्यातिं गतः सः कः?
६. कस्मात् युद्धात् हेतोः बौद्धतत्त्वं पुष्टिं प्राप्नोत्?
७. भारतस्य मुखद्वारम् (गेट् वे आफ् इण्डिया) इति प्रसिद्धं स्मारकं कुत्र अस्ति?
८. एतत् स्मारकं कदा किमर्थं निर्मितम्?

(उत्तराणि अष्टमे पृष्ठे)

## परीक्षन्ताम् आत्मनः सामान्यज्ञानम्

१. उत्तरध्रुवः दक्षिणध्रुवस्य अपेक्षया अपि कियत् अधः अस्ति?
२. पठनार्थम् आवश्यकं प्रकाशं सम्पादयितुं कति खद्योताः मेलनीयाः भवेयुः?
३. सूर्यं परितः कति धूमकेतवः स्युः इति भवन्तः चिन्तयन्ति?
४. चतुर्भिः नेत्रैः युक्ताः मीनाः कुत्र दृश्यन्ते?
५. शर्लाक्होम्स् निर्माता सर् आर्थर् कानन् डोयल् कया वृत्त्या जीवति स्म?
६. सर्पाः कथम् आघ्राणं कुर्वन्ति?
७. का प्रसिद्धाः कलाकृतिः कदाचित् महाराजस्य जन्मप्रकोष्ठम् अलङ्कृतवती आसीत्?
८. मण्डूकः स्वकीयं शिरः वर्तयितुं किं शक्नोति?
९. शलभस्य रक्तस्य वर्णः कः?
१०. जगति अतिप्राचीना प्रतिमा का?

(उत्तराणि अष्टमे पृष्ठे)




१. कः कविः हिमालयं नगाधिराजः इति, देवतात्मा इति च वर्णितवान्?

२. कस्मिन् रूपके मौर्यवंशीयस्य चन्द्रगुप्तस्य कथा वर्णिता अस्ति?

३. का कृतिः हर्षवर्धनकथां परिचाययति?

४. कः भारतीयः कविः आंग्लसर्वकारेण दत्तां 'सर्' (Sir) पदवीं तिरस्कृतवान्?

५. का भारतीया भाषा दक्षिणतः वामं लिख्यते?

६. एषा भाषा केन प्रकारेण रूपिता जाता?

७. एतां भाषां लेखितुं का लिपिः उपयुज्यते?

८. तुलसीदासीयस्य रामायणस्य वास्तविकं नाम किम्?

९. तुलसीदासः कदा कुत्र निवसति स्म?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

– उत्तरा (उदीची) –

**अस्सामी**-उत्तर, **बङ्गाली**-उत्तर, **इंग्लीष्**-नार्त, **गुजराती**-उत्तर, **हिन्दी**–उत्तर, **कन्नड**-उत्तर, **काश्मीरी**-शुमल, **मलयालम्**-वट्टकु, **मराठी**-उत्तर, **ओडिया**-उत्तर, **सिन्धि**-उत्तरु, **पञ्जाबी**-उतर, **तमिळ्**-वडक्कु, **तेलुगु**-उत्तरमु, **उर्दु**-शुमल।

## अपि भवान् विश्वसिति?

* यत् पुराणकालीनं भारतवर्षम् आकारेण इदानीन्तनं भारतम् इव एव आसीत् इति?
* यत् वृषभाः रक्तवस्त्रं दृष्ट्वा कुपिताः भवन्ति इति?
* यत् सर्वे पक्षिणः नीडं रचयन्ति इति?

## न तथा

* इतानीन्तनस्य अपेक्षया अतिविशालम् आसीत्।
* वृषभाः वर्णभेदं ज्ञातुं न अर्हन्ति।
* उलूकाः शुकाः च प्रायः वृक्षकोटरेषु भग्नावशेषेषु च निवसन्ति।

# उत्तराणि

### सः कः स्यात्?

रामानुजाचार्यः। स च देवालयः श्रीरङ्गस्थः।

### इतिहासः

१. सर् सालार् जङ्ग्-I, एषः हैदराबाद् महाराजस्य (निझाम्) प्रधानामात्यः आसीत्।
२. सोमनाथदेवालयः।
३. कृष्णः यत्र शरीरत्यागं कृतवान् इति विश्वस्यते तादृशे प्रभासक्षेत्रे एषः देवालयः अस्ति इत्यतः।
४. अजन्तागुहाः एल्लोरागुहाः च।
५. अशोकः।
६. कलिङ्गयुद्धम्। इतः अशोकस्य हृदये परिवर्तनम् आगतम्। सः बुद्धमतम् अङ्गीकृत्य प्रसारितवान्।
७. मुम्बयी– अपोलो नौकास्थानके।
८. १९११तमे वर्षे जार्जूचक्रवर्तिनं मेरीमहाराज्ञीं च स्वागतीकर्तुम्।

### सामान्यज्ञानम्

१. २७९९ मीटर् अधः।
२. द्वादश खद्योताः अपेक्षिताः भवेयुः।
३. दशकोट्यधिकाः।
४. मध्य-अमेरिकाप्रदेशे।
५. वैद्यकीयवृत्त्या।
६. स्वजिह्वया।
७. मोनोलीसा, राजा फ्रान्सिस्-I स्वजन्मप्रकोष्ठे एतां कृतिं स्थापितवान् आसीत्।
८. न शक्नोति। यतः तस्य कण्ठभागः न भवति।
९. श्वेतः।
१०. स्प्रिङ्क्स्प्रतिमा।

### साहित्यम्

१. कालिदासः।
२. विशाखदत्तविरचिते मुद्राराक्षसे।
३. बाणभट्टविरचितं हर्षचरितम्।
४. रवीन्द्रनाथ ठागोर्।
५. उर्दू।
६. हिन्दी-पर्शियन्भाषयोः आदानप्रदानतः। तुर्कीभाषायाः अपि प्रभावः अत्र अस्ति।
७. पर्शियन् लिपिः।
८. 'रामचरितमानस' इति।
९. वाराणस्याम्, क्रि.श. १५३२-१६२३।

"इदानीम् एतस्य परिणयार्थम् अहं सिद्धा" इति।

राक्षसः उच्चैः हसन्– "मानवानां भवतां व्यवहारः एव विचित्रः" इति वदन् शिवं पृष्टवान्– "शिव! एतस्याः परिणयः भवता अनुमतः खलु?" इति।

"न। अहम् एतां परिणेतुं न इच्छामि" इति दृढस्वरेण उक्तवान् शिवः।

राक्षसः शिवं साभिमानं पश्यन्– "साधु! मानव, साधु! योग्यः विवेकयुतः निर्णयः भवतः। राजा भवितुम् अर्हः भवान्" इति उक्त्वा ततः अदृश्यः अभवत्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! शिवः नलिनीदेवीं यदि परिणयेत् तर्हि सः शान्तिपुरस्य सिंहपुरस्य च राजा अभविष्यत्। किन्तु शिवः तस्याः परिणयं निराकुर्वन् अविवेकं प्रदर्शितवान्। एतादृशस्य शिवस्य व्यवहारं युक्तम् इति उक्तवान् राक्षसः। राक्षसः किमर्थं तथा उक्तवान्? किं सः युक्तायुक्ततानिर्णये असमर्थः? शिवः किमर्थं नलिनीदेव्याः परिणयं निराकृतवान्? एतेषां सन्देहानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्– "नलिनीदेवी स्वार्थपरा। शिवः शौर्येण विक्रमसिंहं पराजितवान्। एतत् जानती अपि सा कमपि व्याजं वदन्ती शिवस्य परिणयं निराकृतवती। किन्तु सः सिंहपुरस्य राजा भविष्यति इति यदा ज्ञातं तदा तं परिणेतुं सिद्धा जाता। एतेन तस्याः स्वार्थपरता, अधिकारव्यामोहः च स्पष्टतया ज्ञायते। अतः एव शिवः तस्याः परिणयं निराकृतवान्। शिवस्य सूक्ष्मग्राहितां दृष्ट्वा राक्षसः सन्तोषं प्रकटितवान्। अजपालकुले जातः अपि शिवः राजोचिताम् अर्हतां प्रदर्शितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# विमाता

साहित्यविषये विशेषादरवती काचित् माता विमातृपुत्रम् औरसपुत्रम् इव पालितवती। सः प्राप्तवयस्कः जातः। मातुः सहवासात् श्रेष्ठः कविः अपि जातः।

सः एकं काव्यं लिखितवान्। तत्र विमाता कथं पुत्रं पीडयति इति विषयः विस्तरेण निरूपितः आसीत्। विमातुः दुष्टता अपि स्पष्टं चित्रिता आसीत्। एतस्य काव्यस्य निमित्तं राजा कविं सत्कृत्य तस्मै पारितोषिकं दत्तवान्। कविः गृहम् आगत्य भक्त्या मातरं नमस्कृतवान्।

तदा माता अश्रूणि स्रावयन्ती खेदेन उक्तवती– "वत्स! विमातुः विषये लोके अनादरः सहजः। भवन्तम् अहं प्रीत्या न पोषितवती वा? एवं मम प्रीतिं प्राप्तवान् भवान् विमातुः विषये अनादरः यथा वर्धेत तथा काव्यं लिखितवान् खलु? किम् एतत् उचितम्?" इति।

तदा सः कविः मातुः अश्रूणि मार्जयन् उक्तवान्– "अम्ब! लोके सर्वाः विमातरः यदि भवादृश्यः भवेयुः तर्हि मया एतादृशं काव्यं न लिखितं स्यात्। भवती तु व्यवहारज्ञा, जन्मतः एव संस्कृता, देवतातुल्या च। किम् इतराः अपि भवादृश्यः भवन्ति? न खलु?" इति।

एतत् श्रुतवत्याः मातुः हृदयम् आनन्देन पूर्णं जातम्।





# नेहरूकथा – ३

जवहरलालनेहरू १९०७ तमे वत्सरे उन्नतविद्याभ्यासार्थं हारोतः केम्ब्रिज् गतवान्। तत्र सः विज्ञानम् अभ्यस्यन् अपि चरित्रे राजकीयशास्त्रे अर्थशास्त्रे च आसक्तिं प्रदर्शयन् आसीत्।

भारतदेशतः प्रकाश्यमानाः वृत्तपत्रिकाः सः आसक्त्या पठति। उग्रवादिनः बालगङ्गाधरतिलकमहोदयस्य, अरविन्द-घोषमहोदयस्य च देशीयया आदर्शभावनया सः नितराम् आकृष्टः। तस्य पिता मोतीलालः सौम्यवादिषु नायकेषु अन्यतमः आसीत्।






तेषु दिनेषु केम्ब्रिज्वासिनः भारतीयाः "मज्लीस्"नामिकायाः संस्थायाः आश्रये तदानीन्तनराजकीयपरिस्थितेः विषये चर्चां कुर्वन्ति स्म। जवाहरलालः तादृशीः सभाः गत्वा उपन्यासं शृणोति। किन्तु सङ्कोचवशात् स्वयम् उपन्यासं कर्तुम् उद्युक्तः न भवति।



१९०९ तमे वत्सरे ग्रीष्मकाले जवहरः पित्रा सह ऐरोप्यदेशेषु प्रवासं कृतवान्। सः बर्लिन्नगरे सर्वप्रथमं विमानं दृष्टवान्। तेन विमानेन कौण्ट् जेप्टिलिन् आगतः आसीत्। तं च जर्मनीराजः कैसर् स्वागतीकृतवान्।

१९१० तमे वत्सरे नेहरू केम्ब्रिज्विश्वविद्यालयस्य पदवीं प्राप्य विनोदयात्रारूपेण नार्वे गतवान्। तत्समये सः मित्रैः सह स्नानार्थं नदीं गतवान्। हिमसदृशस्य जलस्य स्पर्शनेन तस्य हस्तौ पादौ च काष्ठताम् आप्तवन्तौ। तदीयः सुहृत् वेगेन गच्छतः प्रवाहात् तं रक्षितवान्।





अनन्तरं जवहरः लण्डन्नगरे न्यायशास्त्रम् अधीतवान्। १९१२ तमे वत्सरे न्यायशास्त्रीयां पदवीं सम्पाद्य भारतं प्रत्यागतवान्। 'विवेकी मम पुत्रः न्यायमार्गेण गच्छन् मम योग्यः उत्तराधिकारी भविष्यति' इति तृप्तिं प्राप्तवान् मोतीलाल नेहरू।

स्वदेशं प्रत्यागतः जवहरः राजकीयव्यवहारे आसक्तिं प्रदर्शितवान्। १९१२ तमे वत्सरे बङ्कीपुरप्रदेशे प्रवृत्ते कांग्रेसुमहासम्मेलने सः उपस्थितः आसीत्। तस्मिन् सम्मेलने गोपालकृष्ण गोखले तस्मै नितराम् अरोचत।





जवहरलाल् उच्चन्यायालये न्यायवादिवृत्तिम् आरब्धवान्। किन्तु तस्यां वृत्तौ तस्य विशेषासक्तिः न आसीत्। सः तदा तदा मृगयार्थं गच्छति। किन्तु तत्सन्दर्भे जन्तून् मारयितुं न इच्छति। कदाचित् सः व्रणवशात् अधः पतित्वा तापम् अनुभवन्तं, दैन्येन सर्वत्र दृष्टिं प्रसारयन्तं हरिणशिशुं दृष्टवान्। एतेन तदीयं हृदयं विदीर्णम् इव। ततः सः मृगयासक्तिं परित्यक्तवान्।

१९१६ तमे वत्सरे लखनोकांग्रेसुसम्मेलने सः महात्म गान्धिवर्यम् ऐदम्प्राथम्येन दृष्टवान्। दक्षिणाफ्रिकादेशे भारतीयानां विषये आंग्लेयैः प्रदर्शितं निर्दयव्यवहारं विरुध्य कार्यं कृतवन्तं गान्धिवर्यं दृष्ट्वा जवहरः नितरां सन्तुष्टः, आत्मानं धन्यं भावितवान् चापि।





जवहरलाल् अन्यया अपि व्यक्त्या नितराम् आकृष्टः। सा च अलहाबादनगरे बहूनि भाषणानि कृतवती श्रीमती सरोजिनी नाय्डू। अचिरात् एव कालात् जवहरः दृढदेशभक्तरूपेण प्रवृद्धः।

१९१६ तमे वर्षे वसन्तपञ्चम्यां देहलीनगरे जवहरः कमलां यथाविधि परिणीतवान्। अनन्तरं सः पूर्वजानां जन्मभूमौ काश्मीरे नवोढया पत्न्या सह कानिचन दिनानि यापितवान्।





जवहरलालः बान्धवेन केनचित् सह लढक्प्रदेशं गतवान्। समीपे एव अमरनाथः अस्ति इति श्रुत्वा सः तं द्रष्टुं प्रस्थितवान्। बान्धवेन सह एवं पर्वतमार्गेण गमनसमये अजागरूकतावशात् सः खाते पतितः। समनन्तरम् एव बान्धवेन दृढा रज्जुः अधः प्रेषिता इत्यतः तस्याः आधारेण जवहरः उपरि आगतवान्। सुदैववशात् सः एवम् अपायात् रक्षितः अभवत्। —(अनुवर्तते)



# अयाचितप्राप्तम्

प्रशान्तपुरे पूर्वं पूर्णचन्द्रः नाम कश्चन युवकः आसीत्। सः कदाचित् अयाचितरूपेण धनं प्राप्तवान्। तदीयः दूरबन्धुः कश्चन स्वमरणात् पूर्वं पञ्चविंशतिसहस्ररूप्यकात्मकं तत् धनं एतस्य नाम्नि लिखितवान् आसीत्। तत् धनं प्राप्तुं सः तस्य बन्धोः ग्रामं गतवान्। तद्ग्रामीणाः बहवः अकस्मात् ऐश्वर्यं प्राप्तवन्तं पूर्णचन्द्रं बहुधा अभिनन्दितवन्तः। पूर्णचन्द्रः तान् सर्वान् प्रत्यभिनन्दन् स्वग्रामं प्रति प्रस्थितवान्।

एवं प्रत्यागमनसमये नारायणः नाम कश्चित् मिलितवान्। सः संक्षेपेण आत्मनः परिचयादिकम् उक्त्वा – "भोः, भवद्ग्रामीणस्य गणेशस्य पुत्रीं परिणेतुं मम पुत्रः अङ्गीकृतवान् अस्ति। अतः गणेशः सूचनीयः यत् आगामिनि मासे विवाहमुहूर्तः निश्चेतव्यः इति। एतावत् गणेशं सूचयितुं शक्नोति वा भवान्?" इति पृष्टवान्।

पूर्णचन्द्रः एतत् अङ्गीकृतवान्। अनन्तरं सः अयाचितरूपेण प्राप्तेन ऐश्वर्येण सह गृहम् आगत्य तत् धनं गृहे एकत्र रहस्यरूपेण भूमौ निखातवान्।

अनन्तरं गणेशस्य गृहं गत्वा दुःखेन – "श्रीमन्! पूर्णचन्द्रं मां भवान् जानाति एव खलु? मम दौर्भाग्यं किमिति वर्णयामि? पञ्चविंशतिसहस्ररूप्यकात्मकम् ऐश्वर्यम् अयाचितरूपेण प्राप्तम् आसीत्। तेन धनेन क्षेत्रं क्रीत्वा गृहं च निर्माय सुखेन स्थास्यामि इति मम आशा आसीत्। किन्तु धनेन सह प्रत्यागमनसमये चोराः आगत्य सर्वं लुण्ठितवन्तः। इतः परं कथं जीवनम् इत्येव न जानामि" इति विलपितवान्।

एतत् श्रुत्वा गणेशः – "भवतः मम च स्नेहः कोऽपि नास्ति। बन्धुत्वम् अपि



उद्युक्तः।

"तदस्तु तावत्। प्रतिफलं किमपि दातुम् इच्छति खलु भवान्? तर्हि शतं रूप्यकाणि ऋणरूपेण ददातु। वर्षाभ्यन्तरे प्रत्यर्पयिष्यामि" इति उक्तवान् पूर्णचन्द्रः।

"शतरूप्यकात्मकं ऋणं प्रत्यर्पयितुं वर्षात्मकः अवधिः अपेक्षितः वा?" इति सन्देहेन पृष्टवान् गणेशः।

"अयाचितम् ऐश्वर्यं प्राप्य अहं चिन्तितवान् आसम्-क्षेत्रं क्रीत्वा कृषिः करणीया इति। किन्तु तत् ऐश्वर्यं तु यथा आगतं तथैव गतम् अपि। तथापि कृषिवृत्तिः आरम्भणीया इति मम इच्छा न लुप्ता। भवादृशेभ्यः त्रिचतुरेभ्यः उदारेभ्यः ऋणं स्वीकृत्य कृषिक्षेत्रं क्रेतव्यम् इति मम सङ्कल्पः" इति उक्तवान् पूर्णचन्द्रः।

"अस्तु तावत्। कृषिक्षेत्रतः समीचीनं फलं न प्राप्तं चेत् वर्षानन्तरं ऋणप्रत्यर्पणं कथम्?" इति पृष्टवान् गणेशः।

"परम्पराप्राप्तम् एकं गृहम् अस्ति मम। तत् विक्रीय ऋणं प्रत्यर्पयिष्यामि" इति उक्तवान् पूर्णचन्द्रः।

एतेन समाहितः गणेशः पर्णचन्द्राय ऋणरूपेण शतं रूप्यकाणि दत्तवान्। एवम् एव अन्ये अपि ऋणं दत्तवन्तः। तदीयम् ऐश्वर्यं चोरैः अपहृतम् इत्यतः केचन करुणया धनसाहाय्यं कृतवन्तः अपि।

पूर्णचन्द्रः कृषिक्षेत्रं स्वीकृत्य परिश्रमेण

नास्ति। भवान् मद्ग्रामीणः इति एतावत् तु जानामि अहम्। एवं स्थिते मम पुरतः भवान् स्वकीयां दुरवस्थां निवेदयति खलु? किं प्रयोजनम् एतेन?" इति पृष्टवान्।

तदा पूर्णचन्द्रः – "धिक् माम्। स्वदुरवस्थया खिन्नः अहं विषयनिवेदनम् एव विस्मृतवान्। काचित् शुभवार्ता नाम – भवतः पुत्रीं परिणेतुं सिद्धः अस्ति नारायणस्य पुत्रः" इति उक्त्वा नारायणेन सूचितं निवेदितवान्।

एतेन नितरां सन्तुष्टः गणेशः – "परमप्रिया वार्ता एषा। एतदर्थं किं ददामि भवते? क्षणं तिष्ठतु। शर्करया भवतः मुखं मधुरं करोमि" इति उक्त्वा अन्तः गन्तुम्

कार्यम् आरब्धवान्। निरन्तरं परिश्रमं कुर्वन्तं तं दृष्ट्वा ग्रामीणाः सर्वे तस्य श्लाघनं कुर्वन्ति स्म।



तस्मिन् वर्षे फलसमृद्धिः सम्यक् आसीत्। पूर्णचन्द्रेण अपि कृष्या विशेषलाभः प्राप्तः। अतः सः अर्धात् अधिकम् ऋणं प्रत्यर्पितवान्। तदीया प्रामाणिकता एतेन निरूपिता अभवत्।

द्वितीये वर्षे प्राप्तेन लाभेन सः समग्रम् ऋणं प्रत्यर्पयितुं शक्तवान्। एतावदेव न, स्वक्षेत्रस्य पार्श्वे स्थितम् अपरं क्षेत्रं सः क्रीतवान् अपि। कृषिकर्मणि तस्य श्रद्धां दृष्ट्वा सन्तुष्टः कश्चन कृषिकः तस्मै स्वपुत्रीं दत्तवान्। पूर्णचन्द्रस्य पत्न्याः नाम गौरी इति।

गौरी कदाचित् पतिम् उक्तवती – "बहुपूर्वम् एव अहं भवति अनुरक्ता आसम्। निर्धनं भवन्तं मम पिता जामातृत्वेन अङ्गीकर्तुं न सिद्धः इत्यतः मया मौनं स्थितम् आसीत्। यदा भवता ऐश्वर्यं प्राप्तं तदा मां भवते दातुं सिद्धः जातः मम पिता। किन्तु ऐश्वर्यापहारं श्रुत्वा सः निराशः जातः। अनन्तरं कृषिविषये भवतः श्रद्धां दृष्ट्वा सन्तुष्टः सः आवयोः विवाहम् अनुमतवान्। मम अनुरागः सफलः जातः। किन्तु मम संशयः नाम....." इति।

"कः संशयः भवत्याः? निस्सङ्कोचं वदतु तावत्" इति उक्तवान् पूर्णचन्द्रः।

"भवतः गृहं तु परम्पराप्राप्तं खलु? तदाधारेण भवान् बहुपूर्वम् एवं ऋणं प्राप्तुम् अर्हति स्म। ततः क्षेत्रं क्रेतुम् अर्हति स्म। किन्तु तथा न कृतवान्। तत् किमर्थम्? अन्यच्च भवदीयम् ऐश्वर्यं नष्टम् इत्यतः किं जनाः ऋणं दत्तवन्तः?" इति पृष्टवती गौरी।

तदा पूर्णचन्द्रः हसन् उक्तवान् – "वस्तुस्थितिः अत्र अन्या एव अस्ति। भवती मम पत्नी इत्यतः वदामि, शृणोतु। ऐश्वर्येण सह आगच्छता मया गणेशस्य पुत्र्याः विवाहनिश्चयवार्ता अपि श्रावणीया आपतिता। गणेशस्य पुत्र्याः विवाहार्थं दशसहस्रं रूप्यकाणि अपेक्षितानि आसन् एव। तत्समये मम हस्ते यदि धनं स्यात् तर्हि

गणेशः माम् ऋणं प्रार्थितवान् स्यात् एव। एवम् एव अन्ये अपि परिचिताः माम् ऋणं प्रार्थितवन्तः स्युः। मया ऋणदानं निराकृतं चेत् ते सर्वे कुपिताः अभविष्यन्। किन्तु ऋणं दत्तं चेत् प्रायः तत् न प्रत्यागमिष्यत्। यतः तत् मया अयाचितरूपेण प्राप्तं, न तु परिश्रमेण। अतः सर्वे ऋणप्रत्यर्पणविषये औदासीन्यं प्रकटितवन्तः स्युः। अतः धनं चोरैः अपहृतम् इति मिथ्यावार्ता प्रसारितवान् अहम्" इति।

"एवं वा! तर्हि ऐश्वर्यं न नष्टम्? तत् भवतः समीपे एव अस्ति? वस्तुतः अपि दूरदर्शी भवान्। ऐश्वर्यं हस्ते आसीत् इत्यतः धैर्येण ऋणं स्वीकृतवान् भवान्। तेनैव धनेन ऋणं प्रत्यर्पितवान् खलु भवान्?" इति पृष्टवती गौरी।

"तथा न। अयाचितप्राप्तं तत् धनं तथैव अस्ति। परिश्रमेण कार्यं कुर्वन् धनं सम्पाद्य तेन वृद्धिसहितं ऋणं पत्यर्पितवान्। तथैव करणीयम् इति मम सङ्कल्पः आसीत् अपि। पूर्वम् ऋणस्वीकरणे मम भीतिः आसीत्। 'दुर्दैववशात् कृषितः हानिः अनुभूता चेत् गृहम् एव विक्रेतव्यं खलु, ततः मम दुर्गतिः एव स्यात्' इति आतङ्कः आसीत् मम। ऐश्वर्यप्राप्तिबलात् ऋणस्वीकरणे धैर्यं प्राप्तवान् अहम्। दैवानुकूल्यात् श्रमः अपि सफलः जातः। ग्रामे मया गौरवम् अपि प्राप्तम्। अयाचितप्राप्तम् ऐश्वर्यं तथैव स्थितम् अपि। मम आत्मविश्वासः प्रवृद्धः। भवती पत्नीरूपेण प्राप्ता चापि" इति उक्तवान् पूर्णचन्द्रः।

"मया अपि पुण्यवशात् भवान् पतिरूपेण प्राप्तः। दूरदर्शी परिश्रमशीलश्च भवान्। ऐश्वर्ये सत्यपि निर्व्यामोहेन परिश्रमं कुर्वन् अस्ति। तृप्तिप्राप्त्यर्थं यद्यत् आवश्यकं तत्सर्वम् अस्ति मम। पूर्वजानां पुण्यस्य फलम् एतत्" इति ससन्तोषम् उक्तवती गौरी।

अनन्तरं पूर्णचन्द्रः सर्वत्र लाभं प्राप्नुवन् यथेष्टं धनं सम्पादितवान्। एवं चेदपि सः स्वयं कृषिकार्यं न त्यक्तवान्। अतः सः 'कृषिकाणाम् आदर्शः' इति कीर्तिं प्राप्तवान्।





# कृष्णावतारः

मित्राणाम् उपदेशतः रुक्मिणः हृदये सुप्तरूपेण स्थितः पूर्वतनः द्वेषः उद्दीपितः जातः। द्वेषसाधनार्थम् एषः योग्यः समयः इति आलोच्य सः सभाभवने सुवर्णपीठस्य उपरि अक्षपीठम् अक्षान् च सज्जीकृतवान्। 'समययापनार्थं विनोदरूपेण द्यूतेन क्रीडाव' इति बलरामम् आहूतवान्। द्यूताह्वानस्य निराकरणं वीरपुरुषस्य लक्षणं न। तत्रापि बलरामः विशेषतः द्यूतप्रियः। अतः सः उत्साहेन द्यूतार्थम् उपविष्टवान्।

बलरामस्य योग्यः प्रतिस्पर्धी रुक्मी एव इति दाक्षिणात्याः उक्तवन्तः। रुक्मी बलरामश्च पणरूपेण रत्नादिकं राशिरूपेण स्थापितवन्तः। द्यूते सर्वासु अपि, क्रीडासु बलरामस्य एव पराजयः। बलरामः पुनः पुनः ऐश्वर्यं पणीकरोति, पराजयं प्राप्नोति च।

अन्ते बलरामः कोटिसुवर्णानि पणीकृत्य क्रीडितवान्। एतत्सन्दर्भे बलरामस्य एव जयः अभवत्। किन्तु रुक्मी – "अहम् एव जयं प्राप्तवान्" इति उच्चैः उक्तवान्।

"बलरामः पणीकरणम् एव न जानाति। जयापजयस्य अपि नियमान् न जानाति। कोटिसुवर्णानि अहम् एव प्राप्तवान्। जयः मम एव, न तु बलरामस्य" इति पुनः पुनः उक्तवान्।

"सत्यं सत्यम्। रुक्मिणः एव जयः" इति वदन् रुक्मिणः मित्रं कलिङ्गराजः उच्चैः हसितवान्।

उद्गच्छन्तं कोपं निगृहणन् बलरामः उपस्थितान् उद्दिश्य उक्तवान् – "द्यूते

१९. नरकासुरस्य विजृम्भणम्।



ममैव जयः इति भवन्तः स्वयं दृष्टवन्तः। कथं रुक्मिणः जयः भवेत्? साक्षिणः भवन्तः एव वदन्तु-जयः कस्य इति" इति।

कोऽपि किमपि न उक्तवान्। सर्वे शिरः अवनमय्य स्थितवन्तः। तदा रुक्मी बलरामम् उक्तवान् – "मम विजये तेषां सन्देहः यदि स्यात् तर्हि खलु किमपि वदेयुः? मम विजयः सम्मतः इत्यतः ते मौनं स्थितवन्तः" इति।

सत्यं कथं प्रमाणीकरणीयम् इति अजानन् बलरामः मौनं स्थितवान् आसीत्। तावता अशरीरवाणी काचित् श्रुता – "विजयः बलरामस्य एव। रुक्मी असत्यं वदति। भोः जनाः, सत्यं जानन्तः अपि किमर्थं मौनं तिष्ठन्ति? सत्यं सधैर्यं वदन्तु" इति।

एतत् श्रुत्वा अपि सर्वे मौनं स्थितवन्तः। तदा बलरामः रौद्रावतारं प्राप्य मुष्टिना रुक्मिणं बलात् ताडितवान्। द्यूतपीठम् उन्नीय तेन कलिङ्गराजं शिरसि ताडितवान्। एतेन रुक्मी कलिङ्गराजश्च प्राणान् त्यक्तवन्तौ। तयोः मरणं दृष्ट्वा इतरे बलरामस्य उपरि आक्रमणं कृतवन्तः। बलरामः खड्गेन तान् सर्वान् निवारितवान्। बलरामस्य रौद्रावतारं दृष्ट्वा ते पलायितवन्तः।

बलरामः स्ववसतिम् आगत्य रुक्मि-कलिङ्गराजयोः मारणविषयं कृष्णम् उक्तवान्। कृष्णः तत्सर्वं श्रुतवान्। किन्तु न हर्षं प्रकटितवान्, न वा खेदम्। किन्तु इतरे यादववीराः 'भवता उचितम् एव आचरितम्' इति वदन्तः बलरामं श्लाघितवन्तः। अनन्तरं सर्वे वधूवराभ्यां सह द्वारकां प्रत्यागतवन्तः।

बलरामः अर्थतः अपि बलवान् एव। दशसहस्रगजानां बलेन युक्तः भीमः बलरामसकाशात् एव विद्यां गृहीतवान्। यदि कदाचित् भीमबलरामयोः युद्धं भवेत् तर्हि तत्र भीमः एव जयं प्राप्नुयात् इति निश्चयेन वक्तुं न शक्यते। यतः तादृशं बलम् अस्ति बलरामस्य अपि।

कदाचित् कृष्णस्य पुत्रः साम्बः दुर्योधनस्य पुत्रीं लक्षणाम् अनुरागवशात् अपहृत्य गन्तुम्



उद्युक्तः। तावता एतां वार्तां ज्ञात्वा कौरवाः तम् अनुसृत्य गत्वा बद्ध्वा हस्तिनापुरम् आनीय कारागारे स्थापितवन्तः।

एतत् ज्ञात्वा क्रुद्धः बलरामः हस्तिनापुरम् आगत्य 'साम्बः बन्धात् विमोचनीयः' इति शान्तेन स्वरेण उक्तवान्। किन्तु कौरवाः साम्बस्य बन्धविमोचनं निराकृतवन्तः।

एतेन बलरामस्य कोपः पराकाष्ठां प्राप्नोत्। 'जनगृहादिसहितं हस्तिनापुरं गङ्गानद्यां पातयामि' इति प्रतिज्ञां कृत्वा सः प्राकारपर्यन्तायाः आधारभूमेः अधः हलाग्रं स्थापयित्वा नगरभूमिम् उन्नीतवान्। ततः महान् शब्दः उत्पन्नः। हस्तिनापुरं कम्पितं जातम्।

इदानीं दुर्योधनादयः नितरां भीताः। दुर्योधनः साम्बं स्वयं बलरामस्य पुरतः आनीय स्थापयित्वा मृदुभिः वचनैः क्षमां प्रार्थितवान्। पूजासामग्रीः आनीय 'अद्य आरभ्य अहं भवतः शिष्यः' इति वदन् बलरामम् भक्त्या पूजितवान्।

बलरामेण किञ्चिदिव उन्नीतं हस्तिनापुरं तथैव स्थितम्। दुर्योधनः बलरामसकाशात् मल्लयुद्धं गदायुद्धं च अधीत्य प्रसिद्धिं प्राप्तवान्।

एषु एव दिनेषु राक्षसलोके नरकासुरः नाम राक्षसः दिने दिने अभिवर्धमानः आसीत्। प्राग्ज्योतिषपुरं तस्य राजधानी। भूदेव्याः पुत्रः सः बलेन आकारेण च पर्वतोपमः एव। काऽपि देवता तं यथा न संहरेत् तथा ब्रह्मणः सकाशात् वरं प्राप्तवान् आसीत् सः। दुष्टः सः लोकत्रयम् अपि कम्पयति। तस्य पीडातः कथं मुक्तिः इति देवाः सदा चिन्तयन्तः भवन्ति।

नरकासुरः राक्षससेनया सह अमरावतीं गत्वा द्वारकवाटं मुष्ट्या भञ्जयित्वा अन्तः गत्वा देवेन्द्रं युद्धार्थम् आहूतवान्। इन्द्रः ऐरावतम् आरुह्य युद्धार्थं प्रस्थितवान्। यमः, वरुणः, कुबेरः इत्यादयः अपि ससैन्यं युद्धार्थं प्रस्थितवन्तः।

नरकासुरस्य अपि हयग्रीवः, निकुम्भः, मुरासुरः चेति त्रयः महाराक्षसाः साहाय्यकाः आसन्। हयग्रीव-वरुणयोः युद्धं जातम्। वरुणः युद्धे शिरसि आघातं प्राप्य मूर्च्छां



गतवान्। किञ्चित्कालानन्तरं सचेतनतां प्राप्य रणरङ्गात् धावितवान्। तदीया सेना तम् अनुसृतवती।

एवम् एव यमः निकुम्भेन पराजितः, कुबेरश्च मुरासुरेण पराजितः। तौ अपि ससैन्यं पलायितवन्तौ। नरकासुरं सम्मुखीकर्तुम् अशक्तः इन्द्रः अपि अमरावतीं परित्यज्य धावितवान्। नरकासुरः जयकारपूर्वकम् अमरावतीं प्रविश्य स्वकीयं विजयं देवलोके सर्वत्र सडिण्डिमघोषं प्रसारितवान्।

अनन्तरं सः इन्द्रासने उपविश्य ऊर्वशीं स्वसमीपम् आहूय – "दिक्पालकाः सर्वे मया जिताः। इतः परं देवानां राजा अहम् एव। भवती राजानं मां नृत्यगीतादिभिः तोषयेत्। इदानीं नृत्यस्य आरम्भः भवतु" इति उक्तवान्।

"भवान् देवान् जितवान् स्यात्। किन्तु मुनयः किं भवतः पूजां कुर्वन्ति? यज्ञयागादिषु ते भवते यदि आहुतिम् अर्पयेयुः तर्हि अहम् अपि भवतः पुरतः नृत्यं कुर्याम्। वस्तुतः तु इन्द्रस्य पुरतः केवलं नृत्यं करोमि, न तु अन्यत्र इति व्रतम् अस्ति मम" इति उक्तवती ऊर्वशी।

ऊर्वश्या अपमानितः इन्द्रः अमरावतीं लुण्ठितवान्। कुबेरपर्वतं खानयित्वा तत्रत्यं रत्नराशिं वशीकृतवान्। विश्वकर्मणः पुत्रीम् इतराः देवकन्याः च कारागारे स्थापितवान्। अदितेः रत्नखचितं कमण्डलुं वशीकृतवान्। अन्ते अपारेण ऐश्वर्येण सह प्राग्ज्योतिषपुरं गतवान्।

नरकासुरस्य आज्ञां पालयन्तः तदीयाः अनुचराः चतुर्दशसु अपि लोकेषु सञ्चरन्तः दृष्टानि अपूर्वाणि वस्तूनि अपहृत्य आनयन्ति स्म। यत्र यत्र नरकासुरस्य अनुचराः गच्छन्ति तत्र सर्वत्र कश्चन कोलाहलः भवति एव। असङ्ख्याः अप्सरस्त्रियः, शताधिक-चतुर्दशसहस्रं गन्धर्वकन्यकाः, लक्षशः यक्षकन्यकाः, अगणिताः किन्नर-साध्य-सिद्ध-विद्याधरकन्यकाः च प्राग्ज्योतिषपुरस्य कारागारे बन्धने आसन्। एवं नरकासुरस्य पापघटः क्रमशः पूर्यमाणः आसीत्।



मुरः, हयग्रीवः, निकुम्भः, पञ्चजनः च प्राग्ज्योतिषपुरस्य चतसृषु दिक्षु रक्षणकार्यं कुर्वन्तः आसन्। मुरासुरस्य सहस्रशः पुत्राः आसन्। तैः सर्वैः जागरूकतया रक्ष्यमाणे नगरे कस्यापि बाह्यस्य प्रवेशः सर्वथा असाध्यः आसीत्।

'भूलोकः वशीकरणीयः' इति विचारः कदाचित् नरकासुरस्य मनसि आगतः। अतः सः भूलोकं गतवान्। यत्र यत्र यज्ञयागादयः प्रवर्तन्ते तत्र सर्वत्र एषः गच्छति, तान् नाशयति च। दृष्टिपथम् आगतान् ब्राह्मणान् निर्दयं मारयति। मुनीन् बहुधा पीडयति। राज्ञः सिंहासनच्युतान् करोति। धर्मनाशम् एव स्वकीयं मुख्यं कार्यं भावयति स्म सः नरकासुरः।

कदाचित् नरकासुरः बदरिकावनं गतवान्। तत्र केचन ऋषयः यज्ञकार्यनिरताः तेन दृष्टाः। तस्मिन् प्रदेशे होमधूमस्य परिमलः व्याप्तः आसीत्। तदा नरकासुरः ऊर्वश्याः वचनं स्मृतवान्। सः साक्षात् महर्षिणां समीपं गत्वा तान् पृष्टवान्- "कस्य प्रीत्यर्थम् एषः यज्ञः?" इति।

"भूलोकवासिनां श्रेयोनिमित्तं वेदोक्तप्रकारेण इन्द्रप्रीत्यर्थं यज्ञं कुर्वन्तः स्मः" इति उक्तवन्तः ऋषयः।

तदा नरकासुरः कोपेन - "परममूर्खाः भवन्तः। इन्द्रः, वरुणः, कुबेरः, यमः इत्यादयः सर्वे इदानीं मम अधीनाः सन्ति। अमरावत्याः समग्रविश्वस्य च अधिपतिः अहम् एव। अतः मम नाम्ना आहुतिं यच्छन्तु। अहं सन्तुष्टः चेदेव भवतां सर्वेषाम् अभीष्टानि पूरितानि भवन्ति। देवेन्द्रस्य अपि इन्द्रः अहम् एव। अतः सर्वैः अपि अहम् एव पूजनीयः" इति उक्तवान्।

"भवान् इन्द्रः कथं भवेत्? इन्द्रस्तु लोकपालः। इन्द्रपदव्याः प्राप्त्यर्थम् अन्यत् एव तपः आचरणीयम्। भवता तु इष्टपूर्त्यर्थं तपः आचरितम्। भवान् तु मदोन्मत्तः दुष्टः कश्चन राक्षसः। एतादृशस्य भवतः तर्पणं पूजा वा सर्वथा असाध्यम् एव" इति उक्तवन्तः ऋषयः।

एतत् श्रुत्वा नरकासुरः क्रोधोन्मत्तः

जातः। सः राक्षसान् आज्ञापितवान् –"एते दुष्टाः मां मदोन्मत्तं वदन्ति। एतेषां यज्ञं नाशयन्तु" इति।

राक्षसाः अग्निकुण्डे मृत्तिकां पातितवन्तः। पशुं मारितवन्तः। होतारम्, उद्‌गातारं, यज्ञसदस्यान् च सम्यक् ताडितवन्तः। स्रुवं भञ्जयित्वा अरणिम् अग्नौ पातितवन्तः। आज्यं पीत्वा हविः खादितवन्तः। अन्नं सर्वत्र विकीर्णवन्तः।

एतत्सर्वं दृष्ट्वा आनन्दम् अनुभूय नरकासुरः ततः निर्गतवान्।

एतत्सर्वं श्रुत्वा वसिष्ठः, वामदेवः, कपिलः, कश्यपः, कण्वः, जाबालिः, धौम्यः, भरद्वाजः इत्यादयः महर्षयः सम्भूय चिन्तनम् आरब्धवन्तः – 'केन कारणेन यज्ञाचरणे भङ्गः आपतितः? एतस्मात् दुष्टतः अस्मान् को वा रक्षेत्? यदि रक्षकः कोऽपि न स्यात् तर्हि प्रपञ्चस्य स्थितिः एव व्यत्यस्ता भवेत्। तर्हि इदानीं कं शरणं गच्छेम?' इति।

तावता तैः अवतारपुरुषः श्रीकृणः स्मृतः। श्रीकृष्णः एव शरणम् इति निश्चित्य ते सर्वे द्वारकां प्रति प्रस्थितवन्तः।

दक्षिणाभिमुखं गच्छन्तः ते तीर्थक्षेत्रेषु स्नानं कुर्वन्तः देवपूजां च कुर्वन्तः स्वर्गसमानां द्वारकां प्राप्तवन्तः।

नगरस्य वैभववोपेतां दशां पश्यन्तः आश्चर्यम् अनुभवन्तः राजभवनसमीपं गतवन्तः। 'बदरिकाक्षेत्रतः ऋषयः आगताः सन्ति, भवतः दर्शनम् इच्छन्ति इति कृष्णं निवेदयन्तु' इति भटान् सूचितवन्तः च।



ऋषीणाम् आगमनवार्तां श्रुत्वा कृष्णः 'तान् आदरपूर्वकं सत्कृत्य अन्तः आनयतु' इति आदिश्य प्रद्युम्नं प्रेषितवान्।

प्रद्युम्नः बहिः आगत्य सर्वान् भक्त्या नमस्कृत्य सादरं सत्कृत्य मार्गं प्रदर्शयन् तान् राजसभां प्रति नीतवान्।

राजसभायां कृष्णः उन्नतासने उपविष्टः आसीत्। सर्वे यादवप्रमुखाः तं परितः विधेयभावेन उचिते आसने उपविष्टवन्तः आसन्। ऋषयः राजसभां गच्छन्तः परस्परं वदन्ति स्म – 'सर्वाभीष्टपूरकः साक्षाद्दैवतं कृष्णः अत्र स्थितः अस्ति। तथापि वयं तस्य उपस्थितिं विस्मृत्य राक्षसपीडां सोढवन्तः। एतत्सर्वम् अस्माकं पूर्वजन्मनः कर्मणः फलम्। यत् प्रवृत्तं तत् तु गतम् एव। इदानीं वा वयम् एतस्य महात्मनः दर्शनार्थम् उपस्थिताः स्मः। अटव्यां तपसि लीनानाम्, इहप्रपञ्चं विस्मृतवताम् अस्माकम् एतस्य दर्शनभाग्यं तस्य राक्षसस्य कारणतः प्राप्तम्। अतः एव प्राज्ञाः वदन्ति - यत् भवति तत् हिताय एव इति' इति।

कृष्णः ऋषीन् दृष्ट्वा झटिति आसनात् उत्थाय अग्रे आगत्य ऋषीन् नमस्कृत्य आसनेषु उपवेशितवान्। अर्घ्यपाद्यादिभिः मधुपर्कादिभिः च तान् सत्कृत्य तेषाम् अनुमतिं प्राप्य सिहांसने उपविष्टवान्।

सर्वे यादवप्रमुखाः अपि ऋषीन् भक्त्या श्रद्धया च नमस्कृत्य स्वकीयेषु आसनेषु उपविष्टवन्तः।

कृष्णः नमस्कारपूर्वकम् ऋषीन् उक्तवान् – "महात्मानः! भवतां तपः, यज्ञयागादयः च निर्विघ्नतया प्रचलन्ति खलु? नित्यकर्माणि यथाविधि प्रचलन्ति खलु? निरपेक्षाणां भवताम् आगमनस्य विशेषकारणं किमपि न स्यात्। अस्मासु प्रीत्या, द्वारकां पावनां कर्तुम्, अस्मान् कृतकृत्यान् कर्तुं च भवन्तः अत्र उपस्थिताः इति भावयामि। ऋते लोकक्षेमात् अन्या अपेक्षा न भवति भवताम्। मया इदानीं किं करणीयम् इति आदिशन्तु। भवतां वचनं शिरोधार्यम् अस्ति मम" इति।





# सुदीर्घा पूजा

वसुपुरग्रामस्य मार्गेण कश्चन पथिकः गच्छन् आसीत्। स च ग्रीष्मकालीनः मध्याह्नः। अतः पथिकः पिपासितः सन् एकस्य गृहस्य पुरतः स्थित्वा जलं प्रार्थितवान्।

तत्समये तस्य गृहस्य यजमानः द्वारं पिधाय देवपूजायां मग्नः आसीत्। पथिकस्य स्वरं श्रुत्वा उच्चस्वरेण सः उत्तरं दत्तवान्– "क्षणं तिष्ठतु। पूजां कुर्वन् अस्मि। पूजानन्तरं जलं दास्यामि" इति। पथिकः तस्य गृहस्य पुरतः उपविष्टवान्।

किञ्चित्कालानन्तरं गृहस्य अन्तर्भागतः घण्टाध्वनिः श्रुतः। 'इदानीं पूजा समाप्ता, सद्यः एव जलं लभ्यते' इति चिन्तितवान् पथिकः। दश-पञ्चदशनिमेषाः अतीताः चेदपि गृहात् कोऽपि बहिः न आगतवान्। अन्तः स्थितः जलप्रार्थनां विस्मृतवान् स्यात् इति आलोच्य पथिकः पुनः अपि उक्तवान्– "श्रीमन्! जलम् आवश्यकम्" इति।

"एतावता गणपतिपूजा समाप्ता। अन्येषां देवानां पूजाम् आरब्धवान् अस्मि। पूजां समाप्य जलं दास्यामि। तत्रैव उपविशतु तावत्" इति उक्तवान् अन्तस्थः।

किञ्चित्कालानन्तरं पुनः घण्टानादः श्रुतः। इदानीं पूजा समाप्ता एव इति विचिन्त्य पथिकः 'जलं आवश्यकम्' इति पुनः उक्तवान्।

अन्तर्भागतः काऽपि प्रतिक्रिया न आगता। अल्पे काले पुनरपि घण्टानादः। पथिकः क्षणकालस्य अनन्तरम् अन्तस्थं स्मारितवान्– "श्रीमन्! पिपासितः अहं जलं प्रतीक्षमाणः अस्मि" इति।

"नवग्रहपूजा एतावता समाप्ता। मुख्यदेवानां पूजां समाप्य जलं दास्यामि।

कृपया किञ्चित् प्रतीक्षां करोतु" इति सूचितवान् गृहस्वामी।

पुनः यदा घण्टानादः श्रुतः तदा पथिकः पुनः अपि जलदानं स्मारितवान्। "भोः, वेङ्कटेश्वरस्य पूजां समापितवान्। इतरेषां देवानां पूजां समाप्य जलं दास्यामि। इतोऽपि किञ्चित् प्रतीक्षां करोतु" इति सूचितवान् गृहस्वामी।

एवं यदा यदा घण्टानादः श्रूयते तदा तदा पथिकः जलं प्रार्थयति। तदा गृहस्वामी शिवपूजा समाप्ता इति, लक्ष्मीपूजा समाप्ता इति, पार्वती-सरस्वती-सूर्यादीनां पूजा समाप्ता इति क्रमशः वदति।

नितरां पिपासितः पथिकः असहायकतया तत्रैव उपविष्टवान्। यदा यदा एकस्य देवस्य पूजा समाप्ता भवति तदा तदा पार्श्वस्थं कुद्दालं स्वीकृत्य अङ्गणे एकं लघुगर्तं करोति।

अन्ते गृहस्वामी पूजां समाप्य जलेन पूर्णं कलशं गृहीत्वा बहिः आगतवान्।

स्वस्य अङ्गणे पथिकेन कृतान् गर्तान् आश्चर्येण पश्यन् जलपात्रं तत्रैव संस्थाप्य पथिकं प्रश्नार्थकदृष्ट्या दृष्टवान्।

तदा पथिकः गृहस्वामिनम् उक्तवान्– "पूजासमाप्तिसूचकः घण्टानादः यदा यदा श्रुतः तदा मया एवं गर्तः कृतः" इति।

एतत् श्रुत्वा गृहस्वामी कोपेन उक्तवान्– "भवतः बुद्धिः किं नष्टा? अङ्गणे सर्वत्र गर्तं कृतवान् खलु? यदि एवं खननम् एकत्र एव कृतं स्यात् तर्हि तेन लघुकूपः निर्मितः अभविष्यत्। तस्मात् कूपात् प्राप्तेन जलेन भवतः पिपासा निवृत्ता अभविष्यत्" इति।

एतत् श्रुत्वा पथिकः अपि कोपं प्रदर्शयन्– "भवतः वचनं सत्यम्। यथा एकत्रैव खननेन जलम् अलभिष्यत तथैव भवता एकः एव देवः एतावत्पर्यन्तं पूजितः चेत् देवस्य साक्षात्कारः अभविष्यत्" इति उक्त्वा कलशस्थं जलं वेगेन पीत्वा ततः निर्गतवान्। तस्य वचनस्य आन्तर्यं स्मरन् गृहस्वामी तस्य निर्गमनं तदेकदृष्ट्या पश्यन् स्थितवान्।





# प्रतिवञ्चनम्

बाग्दादनगरे पूर्वं कश्चन धनिकः वणिक् आसीत्। सः बहुत्र अटितवान् आसीत्। किन्तु पर्वतानां मध्ये स्थितम् एकं नगरं न गतवान् आसीत्। तत् नगरं गत्वा आगतः कश्चन पथिकः तस्य नगरस्य विषये विस्तरेण एतं वणिजम् उक्तवान्।

तत् श्रुत्वा अधिकं कुतूहलं प्राप्य वणिक् तं पृष्टवान्– "तस्मिन् नगरे किं वस्तु दुर्लभम्?" इति।

"श्रीगन्धकाष्ठखण्डाः तत्र दुर्लभाः। तेषां विक्रयणेन महान् लाभः प्राप्येत" इति उक्तवान् सः पथिकः।

एतेन वणिक् कार्यप्रवृत्तः जातः। सः स्वसमीपे विद्यमानेन समग्रेण धनेन श्रीगन्धखण्डान् स्वीकृतवान्। पर्वतमध्यस्थं तत् नगरं प्रति गतवान् च।

यदा सः नगरसमीपं गतवान् तदा काचित् वृद्धा मेषान् चारयन्ती सम्मुखम् आगता। एतस्य आकारेण एव एषः ऐदम्प्राथम्येन अत्र आगच्छन् अस्ति इति विचिन्त्य– "भोः, दूरात् आगतः स्यात् भवान्। एतस्मिन् नगरे स्थिताः सर्वे वञ्चकाः एव। अतः जागरूकः भवतु" इति उक्त्वा अग्रे गतवती।

वणिक् यदा नगरद्वारसमीपं गतवान् तदा द्वारं पिहितम् आसीत्। प्रातःकालपर्यन्तं वणिक् तत्रैव स्थितवान्।

प्रातः द्वारम् उद्घाटितम्। वणिक् अन्तः गतवान्। तदा कश्चित् सम्मुखम् आगत्य पृष्टवान्– "कः भवान्?" इति।

"अहं बाग्दादनगरीयः वणिक्। अत्र श्रीगन्धकाष्ठखण्डानां विक्रयणार्थम् आगतवान् अस्मि" इति उक्तवान् वणिक्।

"एवं करोतु इति भवन्तं कः उपदिष्टवान् भोः? अत्र वयं श्रीगन्धकाष्ठं पाकादिनिमित्तं

"अरबदेशीया जानपदकथा"



ज्वालनार्थम् उपयुञ्ज्महे। तादृशस्य काष्ठस्य विक्रयणेन भवतः कः लाभः भवेत्?'' इति पृष्ट्वा हसन् सः अग्रे गतवान्।

एतत् सत्यं वा न वा इति न ज्ञातवान् वणिक्। सः वस्तुभिः सह कस्मिंश्चित् वसतिगृहे स्थितवान्। वसतिगृहस्य पार्श्वे एव उपाहारमन्दिरम् अपि अस्ति।

वणिक् वस्तूनि स्वप्रकोष्ठे स्थापयित्वा यदा बहिः आगतवान् तदा एकं विचित्रं दृश्यं दृष्टवान्। नगरद्वारसमीपे यः दृष्टः सः अन्येन सह सम्भाषणं कुर्वन् अग्नेः पार्श्वे उपविष्टः आसीत्। अग्नितः निर्गच्छतः सुगन्धात् ज्ञायते स्म यत् ताभ्यां श्रीगंन्धकाष्ठम् उपयुज्यमानम् अस्ति इति।

एतत् दृष्टवतः वणिजः धैर्यं सर्वथा च्युतम्। तेन यत् उक्तं तत् सत्यम् इति पुरतः स्थितं दृश्यं प्रमाणीकरोति स्म। 'एतस्मिन् नगरे श्रीगन्धकाष्ठं सामान्यकाष्ठम् इव उपयुज्यमानम् अस्ति। अतः मया आनीतानां काष्ठानां विक्रयणेन कानियन रजतनाणकानि प्राप्तानि चेदपि वरम् एव' इति आलोचितवान् वणिक्।

वणिक् यदा समीपम् आगतः तदा तौ पृष्टवन्तौ – ''किं भोः श्रीमन्! एतानि काष्ठानि विक्रीणीते वा?'' इति।

''आं, विक्रयणार्थम् आनीतानि एतानि। केन मूल्येन क्रेतुम् इच्छन्ति भवन्तः?'' इति पृष्टवान् वणिक्।

''भवतः वस्तुनः भारः यावान् भवति तावद्भारयुतं यत् वस्तु पृच्छति तत् दद्मः'' इति उक्तवन्तौ तौ।

वणिक् एतत् अङ्गीकृतवान्। 'सर्वम् अपि आवाम् एव क्रीणीवः' इति सूचितवन्तौ तौ। 'क्रयविक्रयः श्वः' इति निर्णीतवन्तः ते।

अनन्तरं वणिक् नगरभ्रमणार्थं ततः प्रस्थितवान्। मार्गे कश्चित् वणिजं दृष्ट्वा समीपम् आगत्य एतस्य हस्तौ दृडं गृहीत्वा ''मां काणं यः कृतवान् सः मिलितवान्। एषः एव सः। भोः, इतः परं कुत्रापि पलायनं कर्तुं न अर्हति भवान्'' इति उच्चैः उक्तवान्।

वणिक् आश्चर्यं प्रकटयन् पृष्टवान् – ''भवान् कः इति अहं न जानामि एव। इतः

पूर्वम् भवान् मया न दृष्टः अपि। अन्यच्च ऐदम्प्राथम्येन अहम् एतत् नगरम् आगच्छन् अस्मि। एवं स्थिते भवतः काणत्वस्य कारणम् अहं कथं भवेयम्?" इति।

किन्तु तावता तत्र सम्मिलिताः सर्वे काणस्य पक्षम् एव समर्थयन्तः वणिजं सूचितवन्तः – 'भवता भवदीयम् एकं नेत्रम् अर्पणीयम्, अथवा स्वस्य समग्रा सम्पत्तिः अर्पणीया' इति। श्वः निर्णयं वदिष्यामि इति उक्त्वा अवकाशं प्राप्य ततः अग्रे प्रस्थितवान् वणिक्।

एतस्मिन् प्रसङ्गे वणिजः पादरक्षा किञ्चित् भग्ना। तां नीत्वा समीपस्थाय चर्मकाराय दत्त्वा समीकृत्य दातुं सूचितवान्।

"एतदर्थं किं ददाति?" इति पृष्टवान् चर्मकारः।

"भवान् 'सन्तोषः' इति यावत् वदति तावत् दत्तं चेत् पर्याप्तं खलु?" इति पृष्टवान् वणिक्। चर्मकारः एतत् अङ्गीकृतवान्।

पादरक्षां विना गन्तुं न शक्यते खलु? यावत् पादरक्षा सिद्धा न भवति तावत् समयं यापयितुं वणिक् समीपे प्रचलत् द्यूतं द्रष्टुं गतवान्।

वणिजः पार्श्वे स्थितः कश्चित् एतं द्यूतार्थं प्रेरितवान्। वणिक् द्यूते उद्युक्तः जातः। अल्पे एव काले वणिजा द्यूतक्रीडकेभ्यः सर्वेभ्यः धनं दातव्यम् आपतितम्। तदा यः एतं द्यूतार्थं प्रेरितवान् सः उक्तवान् – "समुद्रस्य समग्रं



जलं पिबति, उत भवदीयम् ऐश्वर्यं समग्रम् अर्पयति? अन्यतरं तु करणीयम् एव" इति।

"श्वःपर्यन्तम् अवधिं ददातु। तावता निश्चित्य वदिष्यामि" इति उक्तवान् वणिक्।

"अस्तु तावत्। मं वञ्चयित्वा पलायनं तु असाध्यम् एव" इति उक्त्वा तं प्रेषितवान् सः पुरुषः।

स्वस्य दुःस्थितेः विषये चिन्तयन् मार्गे गच्छन् आसीत् वणिक्। तावता पूर्वं तम् उपदिष्टवती वृद्धा सम्मुखम् आगतवती। वणिजः मुखस्य दर्शनेन एव सा ज्ञातवती यत् किमपि अकार्यं प्रवृत्तम् इति। "किं प्रवृत्तम्? किमर्थं चिन्ता?" इति वणिजं पृष्टवती सा वृद्धा। वणिक् प्रवृत्तं समग्रं निवेदितवान्।



इति।

अन्धकारप्रसारात् पूर्वम् एव वणिक् नगरद्वारसमीपं गतवान्। द्वारसमीपे कश्चन संन्यासिवेषधारी शिलाम् अवलम्ब्य ध्यानम् अभिनयन् आसीत्। वणिक् विना शब्दं शिलायाः पृष्ठतः स्थितवान्।

ततः अल्पे एव काले नगरस्य सर्वे वञ्चकाः भक्ताः इव व्यवहरन्तः संन्यासिनः पुरतः उपविश्य आत्मना कृतां वञ्चनां निवेदितवन्तः।

कश्चन वञ्चकः उक्तवान् – "श्रीमन्! अहम् अद्य विदेशीयवणिक्तः अत्यल्पेन मूल्येन श्रीगन्धकाष्ठं क्रीतवान्" इति।

"केन मूल्येन क्रीतवान्?" इति पृष्टवान् संन्यासी।

"श्रीगन्धकाष्ठस्य भारः यावान् अस्ति तावता भारेण युक्तं वस्तु यत् तेन प्रार्थ्यते तत् दातुम् अहम् अङ्गीकृतवान्" इति उक्तवान् वञ्चकः।

"एवं तर्हि लाभः वणिजः एव भवेत्। भवान् वञ्चितः भवेत्" इति उक्तवान् संन्यासिवेषधारी वञ्चकगुरुः।

"तत् कथं श्रीमन्? श्रीगन्धस्य यावान् भारः तावतः भारस्य सुवर्णं तेन पृष्टं चेदपि मम लाभः एव खलु?" इति उक्तवान् वञ्चकः।

"किन्तु वणिक् भवतः अपेक्षया अपि बुद्धिमान् चेत् भवान् एव वञ्चितः

तदा सा वृद्धा उक्तवती – "मया आरम्भे एव जागरूकतावचनानि उक्तानि आसन्। तथापि भवान् वञ्चितः जातः। एतस्मिन् नगरे एकस्य श्रीगन्धकाष्ठखण्डस्य मूल्यं दश सुवर्णनाणकानि। भवता महत् धनं सम्पादनीयम् आसीत्। किन्तु भवान् सर्वथा वञ्चितः। तथापि धैर्यं मा त्यजतु। सायङ्काले नगरद्वारसमीपं गच्छतु। तत्र निर्जने प्रदेशे कश्चन संन्यासी दृश्यते। सः न वास्तविकः संन्यासी। सः एतन्नगरीयाणां वञ्चकानां गुरुः। अन्धकारप्रसारानन्तरं सर्वे वञ्चकाः एतस्य समीपम् आगत्य स्वकीयान् अनुभवान् निवेद्य तदीयं मार्गदर्शनं प्राप्य आत्मना प्राप्ते कञ्चन भागं समर्प्य गच्छन्ति। भवान् रहस्यरूपेण तत्सर्वं शृणोति चेत् कोऽपि लाभः भवेत्"

भविष्यति। सः तावता प्रमाणेन मक्षिकाः पृच्छति चेत्, तत्रापि अर्धार्धप्रमाणेन पुंस्त्रीजातीयाः भवेयुः इति नियमं सूचयति चेत् भवान् किं कुर्यात्?" इति पृष्टवान् वञ्चकगुरुः।

एतत् श्रुत्वा म्लानवदनः भूत्वा सः वञ्चकः ततः निर्गतवान्।

एतदनन्तरं काणः अग्रे आगत्य – "श्रीमन्! अहम् अद्य एकं विदेशीयं वणिजं वञ्चितवान्। तत्कारणतः एव मम एकं नेत्रं नष्टं जातम् इति वदन्, तदीयम् एकं नेत्रं दातव्यम्, अन्यथा समग्रम् ऐश्वर्यं दातव्यम् इति सूचितवान्" इति उक्तवान्।

"भवान् सर्वथा मूर्खः! भवदीयं नेत्रं स्वकीयं नेत्रं च तुलायां स्थापयित्वा समानभारत्वं निर्णीय मम नेत्रम् अर्पयामि इति सः वदति चेत् भवतः का गतिः? भवान् सर्वथा अन्धः भविष्यति। स तु केवलं काणः भवेत्। अतः भवता इतोऽपि प्रावीण्यं सम्पादनीयम् अस्ति" इति उक्तवान् वञ्चकगुरुः।

काणः अपि खिन्नः सन् ततः गतवान्। अनन्तरं चर्मकारः वञ्चकगुरुसमीपम् आगत्य उक्तवान् – "विदेशीयः कश्चित् पादरक्षासमीकरणार्थं मां सूचितवान्। मम यावता सन्तोषः भवति तावत् ददामि इति उक्तवान् सः। श्वः सः मां द्रक्ष्यति। तेन यावत् दत्तं चेदपि सन्तोषः न जातः इति वदामि। एवं तदीयं सर्वस्वम् अपहरिष्यामि" इति।



"अत्र का बुद्धिमत्ता भवतः? सः एकं ताम्रनाणकम् अपि न दद्यात् भवते। सः बुद्धिमान् यदि स्यात् तर्हि महाराजस्य पुरतः एव सन्तोषयिष्यामि इति वदेत्। सः महाराजं वदेत् – 'भवद्देशं प्रति आगमनसमये समुद्रमार्गेण आगच्छन्तः शत्रवः समुद्रे मज्जिताः जाताः। इतः परं भवतः विरोधी कोऽपि न भविष्यति' इति। तदा सर्वे 'सन्तोषः, सन्तोषः' इति वदन्ति। भवता अपि अनिवार्यतया सन्तोषः इति वक्तव्यम्। अन्यथा राजभटाः भवन्तं पीडयिष्यन्ति" इति उक्तवान् वञ्चकगुरुः। चर्मकारः अपि खेदेन प्रतिगतवान्।

अनन्तरं द्यूतकरः अग्रे आगत्य – "श्रीमन्! अद्य अहं विदेशीयं कञ्चित् द्यूते पराजित्य अधमर्णं कृतवान्। 'समुद्रजलं समग्रं पातव्यम्, अन्यथा सर्वस्वं दातव्यम्' इति नियमं कृतवान्" इति उक्तवान्।

"एतावता एव भवान् आत्मानं बुद्धिमन्तं भावयति खलु? सः भवते किमपि न दद्यात्। समुद्रजलम् अञ्जलिना आनीय मुखे पातयतु इति सूचयेत्। तथा कर्तुं शक्नोति वा? सर्वथा मूर्खः भवान्" इति उक्तवान् वञ्चकगुरुः।

एतानि सर्वाणि वचनानि श्रुत्वा वणिक् ततः जागरूकतया निर्गतवान्। अनन्तरदिने सः वञ्चकगुरुणा यथा सूचितं तथैव वञ्चितवन्। 'श्रीगन्धस्य भारः यावान् अस्ति तावतः भारस्य मक्षिकाः समप्रमाणैन पुंस्त्रीभेदयुताः अपेक्षिताः' इत्येतां प्रार्थनां पूरयितुम् अशक्तः प्रथमः वञ्चकः एकैकं श्रीगन्धकाष्ठखण्डम् अपि दशभिः सुवर्णनाणकैः क्रीतवान्। एवम् एव इतरे त्रयः अपि वणिजा यथा उक्तं तथा कर्तुम् अशक्ताः क्षमां प्रार्थयन्तः ततः निर्गतवन्तः।

वणिक् श्रीगन्धकाष्ठस्य विक्रयणेन यथेष्टं धनं प्राप्तवान्। अनन्तरं वञ्चनात् रक्षणार्थम् उपायं सूचितवतीं वृद्धाम् अन्विष्य तस्यै किञ्चित् धनं दत्तवान्। 'इतः परं कदापि एतत् नगरं न आगमिष्यामि' इति निश्चित्य बाग्दादनगरं गतवान् सः वणिक्।






# गुप्तनिधिः

मालतीपुरे कश्चन निर्धनः कृषिकः निवसति स्म। तस्य ग्रामस्य भूस्वामी कृषिकस्य निर्धनतां दृष्ट्वा करुणया ग्रामसीमायां स्थितां भूमिं दत्तवान्।

सः कृषिकः परिश्रमेण कार्यं कुर्वन् महता प्रयत्नेन तां भूमिं समतलां कृतवान्। अनन्तरं यदा कर्षणम् आरब्धं तदा 'खण् खण्' इति शब्दः तेन श्रुतः। भूमेः अन्तः गुप्तनिधिः अस्ति इति सः ज्ञातवान्।

सः परितः दृष्टिं प्रसारितवान्। समीपे कोऽपि न दृष्टः। 'यः कोऽपि यथा न जानीयात् तथा निधिः गृहं नीतः चेत् दारिद्र्यम् अपगतम् इव। इति आलोचितवान् सः। किन्तु धनपात्रम् एकाकी नेतुम् अपि न शक्नोति सः। पत्नीम् आनयामि वा इति कदाचित् चिन्तितवान्। किन्तु तं विचारं परित्यक्तवान्। यतः तस्य पत्न्याः मुखे रहस्यं क्षणकालम् अपि न तिष्ठति स्म।

बहुधा विचिन्त्य सः एकम् उपायं निश्चितवान्। सायं प्रतिगमनसमये मीनान् एकं कुक्कुटं चापि क्रीतवान्।

मीनान् गृहस्य पृष्ठतः बडिशतन्तुभिः बद्ध्वा तत्र तत्र स्थापितवान्। कुक्कुटं कासारे प्रसारितस्य जालस्य अन्तः पातितवान्। अनन्तरं रिक्तहस्तः सन् गृहं प्रविष्टवान्।

"प्रतिदिनम् अपि रिक्तहस्तः सन् आगच्छति चेत् अहं पाकं कथं वा करोमि?" इति असमाधानेन पृष्टवती पत्नी।

"वृथा किमर्थम् असमाधानं प्रकटयति? गृहस्य पृष्ठतः बडिशं स्थापितम् अस्ति। ततः मीनाः लभ्येरन्। कासारे जालं प्रसारितम् अपि अस्ति। तत्र कोऽपि पक्षी लभ्येत। पश्याम तावत्" इति उक्तवान् कृषिकः।

उभौ अपि गृहात् निर्गतवन्तौ। बडिशेषु




मीनान् प्राप्तवन्तौ। एवम् एव कासारे कुक्कुटम् अपि प्राप्तवन्तौ।

"अहो! किमेतत् आश्चर्यम्?" इति उद्गारं प्रकटितवती पत्नी।

"अत्र आश्चर्यस्य कः अवकाशः? इतोऽपि अधिकम् आश्चर्यकरं विषयं वदामि, शृणोतु– अस्माकं कृषिभूमौ गुप्तनिधिः लब्धः अस्ति। आवां मध्यरात्रे गत्वा तं निधिम् आनयाव। अन्येन ज्ञातं चेत् तत् हस्तच्युतम् इत्येव। अतः जागरूकतया कार्यं करणीयम्। अनन्तरकाले अपि मौनं स्थातव्यम्" इति सूचितवान् कृषिकः।

रात्रौ भोजनादिकं समाप्य ग्रामे सर्वे निद्रां कृतवन्तः इति दृढीकृत्य तौ गृहात् निर्गतवन्तौ। कृषिकः प्रस्थानात् पूर्वम् एव भाण्डे रक्तवर्णमिश्रितं जलं सज्जीकृतवान् आसीत्। यदा पत्नी गृहात् निर्गता तदा एषः पृष्ठतः स्थित्वा सेचननालद्वारा वर्णजलस्य सेचनं कृतवान्।

"किम् एतत्? आकाशे मेघः एव न दृश्यते? मेघं विना वृष्टिः कथम्?" इति आश्चर्येण पृष्टवती कृषिकपत्नी।

"मेघैः विना वृष्टिः नाम रक्तस्य वृष्टिः एव। रक्तवृष्टिः विशिष्टे सन्दर्भे भवति इति श्रूयते। शीघ्रं गच्छाव तावत्" इति उक्तवान् कृषिकः।

"अहो! एवं वा!" इति उद्गारं प्रकटितवती कृषिकपत्नी। अनन्तरं तौ क्षेत्रं गत्वा निधिपात्रम् उन्नीय गृहं प्रति प्रस्थितवन्तौ। एवं प्रत्यागमनसमये भूस्वामिनः गृहस्य समीपे धेनूनां ध्वनिः श्रुतः। "कः शब्दः एषः?" इति भीत्या पृष्टवती कृषिकपत्नी।

"भीतिः किमर्थम्? भूस्वामिनं पिशाचाः नीतवन्तः इति श्रूयते। अतः एव भूस्वामिनः सेवकाः रोदनं कुर्वन्तः सन्ति। ज्येष्ठानां विषये किमर्थं चर्चा? शीघ्रं गच्छाव तावत्" इति उक्तवान् कृषिकः।

तौ दम्पती निर्विघ्नतया गृहं प्राप्तवन्तौ। निधिपात्रम् गृहस्य अन्तः भूमौ स्थापितवन्तौ। कृषिकस्य पत्नी श्रान्तिवशात् शीघ्रम् एव निद्रां प्राप्तवती। एतदनन्तरं कृषिकः उत्थाय पात्रस्थानि सुवर्णनाणकानि

एकत्र, रिक्तानि पात्राणि अपरत्र च भूमौ निखातवान्। ततः सुप्तवान् च।

अनन्तरदिने तस्य पत्नी उक्तवती– "मह्यं सुवर्णनाणकद्वयं ददाति वा? नगरं गत्वा उत्तमानि वस्त्राणि आभरणानि च क्रेष्यामि" इति।

"बुद्धिः अस्ति वा भवत्याः? वयम् उत्तमानि वस्त्राणि धरामः चेत् जनाः सन्देहं न प्राप्नुयुः वा?" इति पृष्टवान् कृषिकः।

"यत् उपयोगाय न भवति तादृशस्य प्राप्त्या किं प्रयोजनम्?" इति असमाधानेन पृष्टवती कृषिकपत्नी। तयोः मध्ये एतद्विषये विवादः आरब्धः, कलहरूपेण प्रवृद्धः च। अन्ते कृषिकपत्नी अश्रूणि स्रावयन्ती कोपेन बलात् पदानि स्थापयन्ती कूपसमीपं गतवती।

तत्र प्रतिवेशिनी तया मिलिता। एषा ताम् उक्तवती– "पश्यतु भोः, मम आर्यपुत्रस्य कीदृशी कृपणता!" इति।

"किमर्थं तथा वदति भवती?" इति पृष्टवती प्रतिवेशिनी।

तदा कृषिकपत्नी तस्याः कर्णसमीपे मुखं नीत्वा मन्दस्वरेण उक्तवती– "एतत् रहस्यम्। अन्यत्र कुत्रापि मा वदतु। कृषिक्षेत्रे अस्माभिः निधिपूर्णं पात्रं प्राप्तम्। बहूनि सुवर्णनाणकानि प्राप्तानि। किन्तु किं प्रयोजनम्? तत् व्ययीकर्तुं न इच्छति आर्यपुत्रः। जीर्णशाटिकाधारणम् एव मम ललाटे लिखितम्" इति।

इतःपरं किं, सायङ्कालाभ्यन्तरे एव



निधिविषयः समग्रे ग्रामे प्रसृतः। भूस्वामी अपि एतां वार्तां ज्ञातवान्। सः उग्ररूपं प्राप्य कृषिकस्य गृहम् आगत्य– "भोः, विश्वासघातक! नीच! निर्धनः इति हेतोः दयया भूमिः निश्शुल्कं दत्ता। किन्तु तत्र प्राप्तं निधिं स्वायत्तीकृत्य मौनं स्थितवान् भवान्। किं तत् भवतः पित्रार्जितं भावयति वा?" इति वदन् निन्दनम् आरब्धवान्।

कृषिकः मनसा किञ्चित् भीतः अपि धैर्यं प्रदर्शयन् भूस्वामिनं पृष्टवान्– "कः निधिः श्रीमन्? केन उक्तम्?" इति।

"भवान् सपत्नीकः निधिं गृहम् आनीतवान् इति श्रुतम्। भवतः पत्नी एव तथा उक्तवती। किमपि अजानन् इव कः निधिः इति पृच्छति खलु भवान्?" इति उक्तवान् भूस्वामी।

कृषिकः पत्नीं तीक्ष्णदृष्ट्या दृष्टवान्। तदा सा तम् पृष्टवती– "किमर्थं मां तथा पश्यति? किं निधिः न प्राप्तः? आवां तं निधिं किं गृहं न आनीतवन्तौ?" इति।

"कदा आनीतम्? कः निधिः आनीतः आवाभ्याम्?" इति आश्चर्यं प्रकटयन् पृष्टवान् कृषिकः।

"किमर्थं तथा पृच्छति भोः? यद्दिने निधिः आनीतः तद्दिने एव खलु गृहस्य पृष्ठतः बडिशेषु मीनाः पतिताः आसन्? तद्दिने एव खलु कासारे जालं प्रसार्य कुक्कुटः गृहीतः? एतत्सर्वं किं भवान् न स्मरति?" इति पृष्टवती कृषिकपत्नी।

तस्याः एतानि असम्बद्धानि वचनानि श्रुत्वा तत्र सम्मिलिताः सर्वे हसितवन्तः।

"भोः, किमर्थं तथा हसन्ति? तद्दिनम् अहं सम्यक् स्मरामि। तस्मिन् दिने रक्तमयी वृष्टिः आगता। भूस्वामी पिशाचैः अपहृतः आसीत् इत्यतः तस्य सेवकाः सर्वे रुदन्तः आसन्" इति उक्तवती कृषिकपत्नी।

"असम्बद्धं वदन्ती एषा उन्मत्ता एव" इति वदन् भूस्वामी ततः निर्गतवान्। अन्ये अपि कृषिकपत्न्याः वचनेषु अविश्वासं प्रकटयन्तः ततः गतवन्तः।



## न डयते मीनः



'डयमानमीनः' इति ख्यातः मीनः वस्तुतः तु न वायौ डयते। उरसः अधः स्थितौ पटलाकारकौ पक्षौ प्रसार्य पुच्छेन जलं बलात् नोदयित्वा वेगेन उत्पतति सः। १२-१५ सेकेण्ड् अभ्यन्तरे सः अन्यत्र पतति। एषः तस्य गतिक्रमः।

## अत्युन्नताः वृक्षाः



क्यालिफोर्नियास्थाः कोस्ट् रेड् वुड् (सीक्वो सेम्पर् वीरेक्स्) जातीयकाः वृक्षाः उन्नतरूपेण वर्धन्ते। एते ३६७.८ द्वादशाङ्गुलोन्नतम् अपि वर्धन्ते कदाचित्।

## कूर्माः दीर्घायुष्मन्तः

कशेरुकेषु जन्तुषु दीर्घायुष्मान् कूर्मः एव। केचन कूर्माः तु १६० वर्षाणि यावत् जीवन्ति इति श्रूयते। ११६ वर्षेभ्यः अनन्तरम् अपि जीवन्ति इत्यत्र तु दृढं प्रमाणम् अस्ति।



# चिरात् दर्शनम्!

| | |
|---|---|
| ईशः – अये! रघुः! किं भोः, चिरात् दर्शनम्! पञ्चभ्यः वर्षेभ्यः पूर्वं दृष्टः भवान् इति स्मरामि। सर्वं कुशलं वा? कदा आगतवान्? | Oh ! Raghu ! Seeing you after a very long time. Isn't five years since we met last ? All is well ? When did you arrive ? |
| रघुः – सर्वं कुशलम्। अर्धघण्टातः पूर्वम् आगतवान्। | Every thing is fine. I came just half an hour before. |
| ई – इदानीं भवान् कुत्र निवसति? कलकत्तानगरे एव, उत अन्यत्र? | Where are you now ? In calcutta or elsewhere ? |
| र – कलकत्तानगरे एव निवसामि। | I am in Calcutta of course. |
| ई – सद्योविवाहितः अत्र आगत्य गतवान्। अनन्तरकाले वार्ता एव नास्ति भवतः। | You were here after the marriage ! and went away. No news at all afterwards. |
| र – आं, वस्तुतः पत्रलेखनविषये अहं सर्वथा अलसः। प्रायः कस्मै . अपि पत्रम् एव न लिखामि। | You are right. Writing letters is something I always feel lazy to do. I almost never write to anybody. |
| ई – तदस्तु तावत्। पत्नी अनुकूला खलु अस्ति? अपत्यानि जातानि वा? | No matter. But is she a good wife? You have children? |
| र – पत्नी तु नितराम् अनुकूला। इदानीम् त्रिवर्षीयः एकः पुत्रः, एकवर्षीया एका पुत्री। | My wife is good in every way. We have a son, three years old, and a one year old daughter. |
| ई – पत्नीपुत्रादिभिः सह कुतः न आगतः भवान्? वयं तेषां दर्शने कुतूहलिनः। | Why didn't you bring your wife and children along? We could have had the pleasure of seeing then too! |
| र – अहं कार्यालयकार्यार्थम् आगतः। अतः एकाकी एव आगतवान्। पुनः कदाचित् सर्वे सम्भूय आगमिष्यामः। | I have come on my office work. So I came alone. We will all come together some other time. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

### विजितं शीर्षिकं जुलै-८९ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **अञ्जयामि कज्जलेन नेत्रपङ्कजम्।**

द्वितीयचित्रम् - **रञ्जयामि कङ्कणैः स्वपाणिपल्लवम्।।**

प्रेषिका - डि. लक्ष्मीभारती, १०-३-६५, गौतमीनगरम्, कोव्वूरु-५३४ ३५० (आ.प्र.)

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अक्षः - Dice

अञ्जलिः - Cavity formed by folding and joining the open hands together

अधमर्णः - Debtor

अन्धः - Blind

अन्वर्थम् - In the true sense of the word

अभिज्ञानम् - Recollection

अयाचितम् - Unasked

उरः - Chest

ऐदम्प्राथम्येन - For the first time

औदासीन्यम् - Solitude

कागदम् - Paper

काणः - One-eyed

कासारः - Tank/Lake

कुक्कुटः - Cock

कुद्दालः - Spade

गोणी - Sack

घृतम् - Ghee

चर्मकारः - Shoemaker

तक्रम् - Butter-milk

तुला - Balance (Weighing instrument)

तूणीरम् - Quiver

नवोढा - Newly married woman

पथिकः - Traveller

प्रतिवेशिनी - Neighbour (F)

बडिशम् - Fish-hook

मक्षिका - Fly

मिष्टकम् - Sweetmeat

युतकम् - Shirt

रजकः - Washerman

लाला - Saliva

लोहकारः - Blacksmith

वधूः - Bride

विक्रीणीते - Sells

विमाता - Stepmother

शर्करा - Sugar

शुकः - Parrot

शृङ्खला - Chain

श्रीगन्धः - Sandal paste

सङ्केतः - Address

सेचननालः - Watering-can

सौचिकः - Tailor

हलः - Plough

